८।४।६५। हलः परस्य झरो वा लोपः सवर्णे झरि ॥ **खरि च** । ८।४।५५। खरि झला चरः स्युः । इत्युदो दस्य तः । उत्थानम् , उत्तम्भनम् ॥

**झयो होऽन्यतरस्याम्** ।८।४।६२। झयः परस्य हस्य वा पूर्वसवर्णः । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः । वाग्घरिः वाग्हरिः ॥ **शश्छोऽटि** ।८।४।६३। झयः परस्य शस्य छो वाऽटि । तद्शिव

---

श्वासस्य अघोषस्य महाप्राणस्य सस्य तादृश एव थकारः ॥ एवं उद्थ्थानमिति स्थिते आह **झरो झरीति** । अत्र पूर्वसूत्रेभ्यः 'अन्यतरस्या' इति 'हलः' इति 'लोपः' इति चानुवर्तते । हलः इति पञ्चमी । झरः इति षष्ठी । एव उद्थ्थानम् इत्यत्र पूर्वथकारस्य पाक्षिकलोपे कृते आह **खरि चेति** । अत्र झलामिति चरः इति चानुवर्तते । एव उद्थानम् इत्यत्र दकारस्य तकारे कृते उत्थानमिति रूपम् । लोपाभावे उत्थ्थानम् इति रूपम्* । एव उत्थ्तम्भनम् उत्तम्भनम् ॥ **झयो हो - इति** । 'झयः' इति पञ्चमी तेन झयः परस्मात् इत्यर्थ । 'हः' इति 'सवर्णः' इति च वर्तते । वाग्घरिः इति — वाच् हरिः इति स्थिते 'चोः कुः' इत्यनेन चकारस्य ककारः ततः 'झला जशोऽन्ते' इति सूत्रेण गकारः । एव वाग् हरिः इति स्थिते हकारस्थाने प्रकृतसूत्रेण गकारसवर्णे कर्तव्ये कवर्गीयाणा सर्वेपामपि स्थानतो हकारेणान्तर्याविशेषात् आभ्यन्तरप्रयत्नसाम्याभावाच्च बाह्यप्रयत्नत आन्तर्ये विचार्यमाणे नादघोषसंवारमहाप्राणवता हकारेण घकारस्यैवान्तरतम्यम् तेन वाग्घरिः इति रूपम् । पक्षे हकारस्य पूर्वसवर्णाभावे वाग्हरिः इति रूपम् । 'झयः' इति किम् । 'प्राङ् हसति' इत्यत्र 'भवान् हसति' इत्यत्र च पूर्वसवर्णाभावः ॥ **शश्छो - इति** । झयः इति अन्यतरस्यामिति च पूर्वसूत्रादनुवर्तते । स शिवः इत्यर्थे कर्मधारयसमासे तद् शिवः इति स्थिते दकारस्य 'स्तोः श्चुना-' इति सूत्रेण जकारे कृते 'खरि च' इति सूत्रेण चकारः । ततः प्रकृतसूत्रेण शकारस्य

---

* चर्त्वं प्रति प्रथमथकारस्यासिद्धत्वात् अस्मिन् पक्षे न तकारादेशः ।

इत्यत्र दस्य श्चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्शिवः तच्छिवः । ( **छत्वममीति वाच्यम्** । ) तच्छ्लोकेन ॥

**मोऽनुस्वारः** ।८।३।२३। मान्तस्य पदस्यानुस्वारो हलि । हरिं वन्दे ॥ **नश्चापदान्तस्य झलि** ।८।३।२४। नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि, आक्रंस्यते । झलि किम् । मन्यते ॥ **अनुस्वारस्य ययि परसवर्णः** ।८।४।५८। स्पष्टम् । शान्तः ॥ **वा पदान्तस्य** ।८।४।५९। त्वङ्करोषि, त्वं करोषि ॥

---

पक्षे छत्वम् । तेन तच्छिव· इति रूपम् । पक्षे तच्शिवः ॥ **छत्वममीति** । 'शश्छोऽमि' इति सूत्र पठनीयमिति वार्त्तिकार्थः । अन्यथा तद् श्लोकेन इत्यत्र लकारस्य 'अट्' प्रत्याहारान्तःपातित्वाभावात् शकारस्य छत्व न स्यात् ॥ **मोऽनुस्वार इति** । पदस्य इत्यधिकारसूत्रमत्रानुवृत्तम् । 'मः' इति षष्ठी 'पदस्य' इत्यनेन संबध्यते । ततः 'येन विधिस्तदन्तस्य ।' इति सूत्रेण मान्तस्य पदस्य इत्यर्थः पर्यवस्यति । हलि इति अनुवर्तते । हरिम् वन्दे इत्यत्र प्रकृतसूत्रेण हरिम् इति पदस्यानुस्वारे कर्तव्ये 'अलोऽन्त्यस्य' इति परिभाषया मकारस्यानुस्वारः । मान्तस्य पदस्य इति किम् । गम्यते इत्यत्र मकारस्य पदान्तत्वाभावात् नानुस्वारः ॥ **नश्चेति** । चकारेण 'मः' इति षष्ठयन्त पदमनुकृष्यते । यशांसि इति प्रथमाबहुवचनम् । यशस् शब्दात् जस् । तस्य शिः । तस्मिन् परतः यशस् शब्दस्य 'नुम्' आगमः, उपधादीर्घत्व च । यशान् स् इ इति स्थिते प्रकृतसूत्रेण नकारस्यानुस्वारः । आक्रंस्यते इति 'क्रमु पादविक्षेपे' इति आङ् पूर्वात् धातोः लृटि प्रथमपुरुषैकवचनम् । अत्र मकारस्यानुस्वारः । मन्यते इत्यत्र यकारस्य झल्प्रत्याहारबहिर्भूतत्वात् नकारस्य नानुस्वारः ॥ **अनुस्वारस्येति** । शान्तः 'शम उपशमे' इति धातोर्निष्ठाया रूपम् । शम् त इति स्थिते 'वा दान्तशान्त-' इति सूत्रेण निपातनादिडभावे 'अनुनासिकस्य क्विझलोः क्ङिति' इति सूत्रेण उपधादीर्घे शाम् त इति स्थिते नश्चापदान्तस्येति सूत्रेण अनुस्वारे कृते प्रकृतसूत्रेण तकारसवर्णो नकारः ॥ **वा पदान्तस्येति** । पदान्तस्यानुस्वारस्य ययि परतः विकल्पेन परसवर्णादेशो भवति इत्यर्थः । त्वम् करोषि इति स्थिते पदान्तस्य मकारस्य विभाषया कसवर्णो नासिकास्थानो ङकारादेशः ॥ **मो राजि सम इति** । 'मोऽनुस्वारः' इति

**मो राजि समः क्वौ** ।८।३।२५। क्विबन्ते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ॥

**हे मपरे वा** ।८।३।२६। मपरे हकारे परे मस्य मो वा । किम् ह्मलयति, किं ह्मलयति । ( **यवलपरे यवला वा** ) । किय्ँ ह्यः, किं ह्यः । किव्ँ ह्वलयति, किं ह्वलयति, किल्ँ ह्लादयति, किं ह्लादयति ॥ **नपरे नः** ।८।३।२७। नपरे हकारे मस्य नो वा । किन् ह्नुते, किं ह्नुते ॥ **ङः सि धुट्** ।८।३।२९। ङात्परस्य सस्य धुड्वा ॥ **आद्यन्तौ टकितौ** । ।१।१।४६। टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः । षट्त्सन्तः, षट्सन्तः ॥

---

सूत्रात् 'मः' इति षष्ठ्यन्तमनुवर्तते । प्रकृतसूत्रे 'मः' इति प्रथमान्त पदम् । क्वौ राजि क्विप्प्रत्ययान्ते राजतौ परतः । मकारस्य मः स्यात् अनुस्वारो न स्यादित्यर्थः । 'मोऽनुस्वारः' इत्यस्यापवादोऽयम् । सम्राट् क्विप्प्रत्ययान्तस्य सम्पूर्वस्य राजृधातोः प्रथमैकवचनम् । समः इति किम् । अयं राट् । क्वौ इति किम् सराजिता ॥ **हे मपर इति** । मः इति षष्ठ्यन्त मः इति प्रथमान्तं च पूर्वसूत्रेभ्योऽनुवर्तते । 'मपरे' इति बहुव्रीहिः 'हे' इत्यस्य विशेषणम् । मः परो यस्मात् तस्मिन् इति विग्रहः । ह्मलयति-ह्मल चलने इति भ्वादिगणीयात् धातोर्णिचि रूपम् । मित्त्वात् उपधाह्रस्वः । **यवलपर इति** । यवलपरे हकारे परतः मस्य यवला वा । नासिकास्थानस्यानुनासिका एव यवला आदेशा भवन्ति तेन किय्ँ ह्यः इति रूपम् । पक्षे मस्यानुस्वारे किं ह्यः ॥ **नपरे न इति** । 'हे' इति 'मः' इति 'वा' इति चानुवर्तते । नः परो यस्मात् सः नपरः । ह्नुते–ह्नुङ् अपनयने इत्यस्य लटि प्रथमपुरुषैकवचनम् ॥ **ङः सीति** । वा इति वर्तते । ङः इति पञ्चमी,ङकारात् परतः। उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्, परत्वात् । एतत्पञ्चमीवशाच्च सि इति सप्तमी षष्ठी सम्पद्यते । तस्मादित्युत्तरस्य । धुट् आगमः । उकारः उच्चारणार्थः । टकारः इत् । तस्य प्रयोजन दर्शयति **आद्यन्ता इति** । आदिश्च अन्तश्च आद्यन्तौ टश्च कृच टकौ टकारादकार उच्चारणार्थः । टकौ इतौ ययोः तौ टकितौ यथा धुट्, षुक् । टित् षष्ठीनिर्दिष्टस्य आदिर्भवति कित् अन्तो भवतीत्यर्थः । षड् सन्तः इति स्थिते पूर्वसूत्रेण सस्य धुट् धकारस्य 'खरि च' इति सूत्रेण तकार । ततः उकारस्य

**ङ्णोः कुक् टुक् शरि** ।८।३।२८। वा स्तः । प्राङ्षष्ठः, प्राङ्क्षष्ठः । ( **चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्** । ) प्राङ्ख्षष्ठ , सुगण्षष्ठः, सुगण्ट्षष्ठः, सुगण्ठ्षष्ठः ॥ **नश्च** ।८।३।३०। नान्तात्परस्य सस्य धुड्वा । सन्त्सः, सन्सः ॥ **शि तुक्** ।८।३।३१। पदान्तस्य नस्य शे परे तुग्वा । सञ्छभुः सञ्च्छभुः, सञ्चूशंभुः, सञ्शंभुः ॥ **ङमो ह्रस्वादचि ङमुण्नित्यम्** ।८।३।३२। ह्रस्वात्परो यो ङम् तदन्त यत्पदं तस्मात्परस्याचो ङमुट् । प्रत्यङ्ङात्मा, सुगण्णीशः सन्नच्युतः ॥

---

तेनैव सूत्रेण टकारः । षट् त्सन्तः । धुडभावे षट् सन्तः ॥ **ङ्णोः कुक्-इति** । ङ्णोः इति षष्ठी ङकारस्य णकारस्य चेत्यर्थ । कुक्टुकौ आगमौ । वा इति पूर्वसूत्राद-नुवर्तते । प्राङ् षष्ठः इति स्थिते प्रकृतसूत्रेण ङकारस्य कुगागमोऽन्तावयव । प्राङ्-क्षष्ठः ॥ **चयो द्वितीया इति** । ङकारणकाराभ्या परस्य वर्गाणा प्रथमवर्णस्य स्थाने द्वितीयवर्णो भवति शरि परतः इति पौष्करसादेः आचार्यस्य मतम् । आचार्यनाम-निर्देशात् विकल्पः । पुष्करे तीर्थविशेषे सीदति इति पुष्करसद्, तस्य अपत्यं पौष्करसादि । अनुशतिकादित्वादुभयपदवृद्धिः । एतद्वार्त्तिकेन पक्षे प्राङ्ख् षष्ठः । शोभन गणयति इति सुगण् ॥ **नश्चेति** । ' सि धुट् ' इति ' वा ' इति च वर्तते । न इति पञ्चमी । पदस्य इत्यनुवृत्त नः इति पञ्चमीवशात् पञ्चम्या विपरिणम्यते तदन्त-विधिना नान्तात्पदात् परतः इत्यर्थः पर्यवस्यति । शोभन सः सन्सः, सन्त्सः ॥ **शि तुगिति** । नः इति पदस्य इति वा इति च वर्तते । शि इति सप्तमी नः इति पञ्चम्या षष्ठी प्रकल्पयति तेन फलितमाह—पदान्तस्य नस्य । सन् शंभुः इति स्थिते प्रकृतसूत्रेण नकारस्यान्तावयवः तुक् । सन्त् शभुः इति जाते शश्छोऽटि इति सूत्रेण शकारस्य छत्वम् । ततः तकारस्य नकारस्य च श्चुत्वम् । सञ्च्छभुः । ' झरो झरि सवर्णे ' इति चकारस्य पाक्षिके लोपे सति सञ् छम्भुः । छत्वाभावे सञ्चूशभुः । तुगभावे सञ्शम्भुः ॥ **ङमो ह्रस्वादिति** । ङमः इति पञ्चमी तद्बलाच्च पदस्य इति अधिकृतं पद पञ्चम्यन्ततया विपरिणम्यते । तेन ङमन्ता-पदात् इत्यर्थः । ह्रस्वात् इति ङमः इत्यनेन सबध्यते तेन फलितमाह—ह्रस्वा-त्परो यो ङम् इति । ङमः इति पञ्चमीबलात् अचि इति सप्तमी षष्ठी सम्पद्यते ङमुट् आगमः । उकारः उच्चारणार्थः । टकारः इत् । ङम् प्रत्याहारः । ङमुटि सज्ञायां कृत टित्त्व ङ् ण् न् इति संज्ञिभिः सबध्यते । तेन ङकारान्तात्परस्य

**समः सुटि** ।८।३।५। समो रु सुटि ॥ **अत्रानुनासिकः पूर्वस्य तु वा** ।८।३।२। अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा ॥ **अनुनासिकात्परोऽनुस्वारः** ।८।३।४ अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ॥ **खरवसानयोर्विसर्जनीयः** ।८।३।१५। खरि अवसाने च पदान्तस्य रेफस्य विसर्गः। ( **संपुंकानां सो वक्तव्यः** ।) सँस्स्कर्ता सस्स्कर्ता ॥ **पुमः खय्यम्परे** ।८।३।६। अम्परे खयि पुमो रुः । पुँस्कोकिलः ।

---

अचः ङमुट् आगमः। णकारान्तात् णुट्, नकारान्ताच्च नुट्, इत्यर्थः ॥ **समः सुटीति**। रुः इति अनुवर्तते। सम्पूर्वात् करोतेस्तृचि सुडागमे सम् स्कर्ता इति स्थिते प्रकृतसूत्रेण मस्य रुत्वम्, ततः सर् स्कर्ता इति जाते आह **अत्रानुनासिक इति**। अत्र रुप्रकरणे। पूर्वस्य-रु इत्यपेक्षया पूर्वस्य। अधिकारसूत्रमिदम्। इत उत्तर यस्य स्थाने रुः विधीयते ततः पूर्वस्य वर्णस्य वाऽनुनासिको भवतीत्यर्थः। एतेन सँर्स्कर्ता इति भवति ॥ अनुनासिका-भावपक्षेऽनुस्वार विधत्ते-**अनुनासिकात्परोऽनुस्वारः इति**। अनुनासिक विहाय इत्यर्थे ल्यब्लोपे 'कर्मण्यधिकरणेच' इति वार्त्तिकेन 'अनुनासिकात्' इति प्रयोगः। यस्मिन् पक्षेऽनुनासिको न भवति तस्मिन् इत्यर्थः। परः परशब्देन रोः पूर्वस्य अनुस्वार आगमो भवतीति द्योत्यते। तेन संर्स्कर्ता इति पक्षे भवति ॥ अधुना पक्षद्वयेऽपि रेफस्य विसर्गभावं विधत्ते **खरवसानयोरिति**। 'र' इति 'पदस्य' इति च वर्तते। तेन रेफान्तस्य पदस्य इत्यर्थः। अलोऽन्त्यपरिभाषया 'पदान्तस्य रेफस्य' इत्यर्थः पर्यवस्यति ॥ एव पक्षद्वयेऽपि प्रकृतसूत्रेण रोर्विसर्गे जाते आह **संपुंकानाम्-इति**। 'सम्' 'पुम्' 'कान्' इत्येतेषा विसर्गाणा सः भवति, इति वार्त्तिकार्थः। एतेन अनुनासिकपक्षे सँस्स्कर्ता इति रूप, अनुस्वारपक्षे तु संस्स्कर्ता इति रूपं लभ्यते ॥ 'समो वा लोपमेके' इति भाष्योक्तेः समो मस्य पाक्षिकलोपे कृते सँस्कर्ता सस्कर्ता इत्येकसकार रूपद्वयम्। **पुमः खय्यम्परे-इति**। रुः इति वर्तते। पुमः इति लुप्तसकारस्य 'पुम्स्' शब्दस्यानुकरण षष्ठ्य-न्तम्। पुमो रुः-अलोन्त्यपरिभाषया मकारस्य रुः। पुस्कोकिलः-पुमान् कोकिल इत्यर्थे कर्मधारयसमासे पुस् कोकिलः इति स्थिते 'संयोगान्तस्य लोपः' इति सूत्रेण सकारस्य लोपे पुम् कोकिलः इति स्थिते,

पुस्कोकिलः ॥ **नश्छव्यप्रशान्** ।८।३।७। अम्परे छवि नान्तस्य पदस्य रुः ॥ **विसर्जनीयस्य सः** ।८।३।३४। खरि । चक्रिँस्त्रायस्य, चक्रिस्त्रायस्व । अप्रशान् किम् । प्रशान्तनोति । पदान्तस्येति किम् । हन्ति ॥ **नॄन्पे** ।८।३।१०। नॄनित्यस्य रुर्वा पे ॥ **कुप्वोः ≍क≍पौ च** । ८।३।३७ कवर्गे पवर्गे च विसर्गस्य ≍क≍पौ स्तः । चाद्विसर्गः । नॄँ≍

---

प्रकृतसूत्रेण मकारस्य रुः, रोः पूर्वस्य विकल्पेनानुनासिकत्वमनुस्वारागमश्च, पक्षद्वयेऽपि 'खरवसानयोः—' इति सूत्रेण रोर्विसर्गः 'सपुकानाम् –' इति वार्त्तिकेन च तस्य सकारः । एवं पुँस्कोकिलः पुंस्कोकिलः इति रूपद्वयम् ॥ **नश्छव्यप्रशानिति** । नः इति षष्ठी 'पदस्य' इत्यधिकृतस्य विशेषणम् । तदन्तविधिना 'नान्तस्य पदस्य' इत्यर्थः । अम्परे इति वर्तते । तस्य छवि इत्यनेनान्वयः । रुः इत्यपि वर्तते । चक्रिन् त्रायस्व इति स्थिते प्रकृतसूत्रेण नकारस्य रुः, रोः पूर्वस्य विकल्पेनानुनासिकत्वमनुस्वारागमश्च पक्षद्वयेऽपि रोर्विसर्गः । एवं चक्रिँः त्रायस्व इति चक्रिंः त्रायस्व इति च जाते आह **विसर्जनीयस्येति** । खरि इति वर्तते । **अप्रशान् इति** । नश्छवि – इति सूत्रे वर्तमानं 'अप्रशान्' इति पदं प्रथमान्तं षष्ठ्यर्थे प्रयुक्तम् । प्रशान्भिन्नस्य नान्तस्य पदस्य रुर्भवति इत्यर्थः । प्रशान् इति प्रपूर्वात् शाम्यतेः क्विप्प्रत्ययान्तस्य प्रथमैकवचनम् । हन्ति–अत्र नकारो न पदान्तः, हन् इत्यस्य पदसंज्ञाऽभावात् । सुप्तिङन्तं पदम् ॥ **नॄन् प इति** । 'रुः' इति 'उभयथा' इति च वर्तते । नॄन् इति द्वितीयान्तं शब्दस्वरूपपरं सूत्रे प्रयुक्तम् । तत्परस्य षष्ठ्या लुक् । पे इति सप्तमी । अत्र अकारः उच्चारणार्थः, तेन नॄँ पुनाति इत्यत्रापि रुत्वादि भवति । नॄन् पाहि इति स्थिते प्रकृतसूत्रेण पक्षे नॄँः पाहि नॄंः पाहि इति च जाते आह **कुप्वोरिति** । सूत्रे आदेशयोः कपौ जिह्वामूलीयोपध्मानीययोर्निर्देशायोच्चारणार्थौ । तदेवं नॄँ≍ पाहि, नॄं≍ पाहि इत्युपध्मानीयपक्षे आनुनासिक्येऽनुस्वारे च सति रूपद्वयम् । एवमेव नॄँः पाहि, नॄंः पाहि इति विसर्गपक्षे रूपद्वयम् । रुत्वाभावे च नॄन् पाहि इति रूपम् । एवं पञ्च रूपाणि ॥ 'कानाम्रेडिते' इति सूत्रस्थमाम्रेडितपदं व्याचष्टे **तस्य पर-**

पाहि, नॄं ४ पाहि, नॄँः पाहि, नॄ पाहि, नॄन्पाहि ॥ **तस्य परमाम्रेडितम्** ।८।१।२। द्विरुक्तस्य परमाम्रेडित स्यात् ॥ **कानाम्रेडिते** ।८।३।१२। कान्न-कारस्य रुः स्यादाम्रेडिते । कॉंस्कान्, कांस्कान् ॥ **छे च** ।६।१।७३। ह्रस्वस्य छे तुगागमः । शिवच्छाया ॥ **पदान्ताद्वा** ।६।१।७६। दीर्घात्पदान्ताच्छे तुग्वा । लक्ष्मीच्छाया, लक्ष्मीछाया ॥ **इति हल्संधिप्रकरणम्** ॥

## ॥ अथ विसर्गसंधिप्रकरणम् ॥

**विसर्जनीयस्य सः** ।८।३।३४। खरि । विष्णुस्त्राता ॥ **वा शरि** ।८।३।३६। शरि विसर्गस्य विसर्गो वा । हरिः शेते, हरिश्शेते ॥

---

**मिति** । तस्य द्विरुक्तस्य । **कानाम्रेडित इति** । 'कान्' इति द्वितीयान्त शब्दस्वरूपपरम् । षष्ठ्याः सौत्रो लुक् । नः इति रुः इति च वर्तते । कान् कान् इति स्थिते प्रकृतसूत्रेण प्रथमकान्शब्दस्य नकारस्य रु । ततोऽनुनासिकपक्षे रोर्विसर्गे, सुपुंकानामिति वार्त्तिकेन विसर्गस्य सकारे कृते कॉंस्कान् इति रूपम् । अनुस्वारपक्षे तु कांस्कान् इति ॥ **छे चेति** । संहितायाम् इति ह्रस्वस्य तुक् इति च वर्तते । शिवस्य छाया इत्यर्थे तत्पुरुषसमासे शिव छाया इति स्थिते प्रकृतसूत्रेण अकारस्य तुगागमे कृते शिवत् छाया इति जाते तकारस्य जश्त्वेन दकारे, स्तो श्चुना श्चुः इति दकारस्य जकारे खरि चेति चर्त्वे कृते शिवच्छाया इति रूपम् । 'छे' इत्यस्मिन् अकारः उच्चारणार्थः तेन विच्छिन्नमित्यत्रापि तुग् भवति ॥ **पदान्ताद्वेति** । दीर्घात् इति छे इति तुक् इति च वर्तते । दीर्घात् पदान्तात् इति पञ्चमी षष्ठ्यर्थे । पदान्तस्य दीर्घस्य इत्यर्थः । पूर्ववत् लक्ष्मीच्छाया इति तुकि कृते रूपम् । तुगभावे तु लक्ष्मीछाया ॥ **इति हल्संधिः** ।

## अथ विसर्गसन्धिप्रकरणम् ।

**विसर्जनीयस्य स इति** । खरि इति वर्तते । विष्णुः त्राता इति स्थिते तकारस्य खर्प्रत्याहारान्तःपातित्वात् विसर्गस्य सः, विष्णुस्त्राता ॥ **वा शरीति** । विसर्जनीयस्य इति विसर्जनीयः इति च वर्तते ॥

**ससजुषो रुः** ।८।२।६६। पदान्तस्य सस्य सजुषश्च रुः स्यात् ॥ **अतो रोरप्लुतादप्लुते** ।६।१।११३। अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति। शिवोऽर्च्यः ॥ **हशि च** ।६।१।११४। तथा। शिवो वन्द्यः ॥ **भोभगोअघोअपूर्वस्य योऽशि** ।८।३।१७। एतत्पूर्वस्य रोर्यादेशोऽशि। देवा

---

**ससजुषो रुरिति** । पदस्य इति वर्तते । तदन्तविधिना पदान्तस्य सस्य पदान्तस्य सजुषश्च इत्यर्थः । 'सजुष्' शब्दे 'अलोऽन्त्यस्य' इति योगेनान्त्यषकारस्यैव रु । शिवस् अर्च्य इति स्थिते प्रकृतसूत्रेण सकारस्य रुत्वे कृते आह **अतो रोरप्लुतादप्लुत इति** । उत् इति अत् इति च वर्तते। अप्लुतादकारादुत्तरस्य रोः अप्लुतेऽकारे परतः उकारादेशो भवति इत्यर्थः । एतेन शिवउ अर्च्यः इति जाते 'आद्गुणः' इति सूत्रेण पूर्वपरयोर्गुणादेशे शिवो अर्च्यः इति जाते 'एङः पदान्तात्-' इति सूत्रेण ओकारस्य अकारस्य च स्थाने पूर्वरूप ओकार * । शिवोऽर्च्यः ॥ **हशि चेति** । 'अतो रोरप्लुतात्' इति 'उत्' इति च वर्तते। अप्लुतादकारादुत्तरस्य रोः हशि परतः उकारादेशो भवति इत्यर्थः । शिवस् वन्द्यः इति स्थिते सस्य रुत्वे प्रकृतसूत्रेण उत्वे च कृते अकारोकारयोः स्थाने गुणादेशे शिवो वन्द्य इति रूपम्। सजुष् + देवेभिः = सजूर्देवेभिः 'र्वोरुपधाया दीर्घ इकः' इति उकारस्य दीर्घत्वम्। **भोभगो – इति** । रोः इति वर्तते । भो भगो अघो अ इत्येषां द्वन्द्वः, एते पूर्वे यस्मात् तस्य रोः। पूर्वशब्दः प्रत्येकं संबध्यते । देवास् इह इति स्थिते 'ससजुषो रुः' इति सूत्रेण सस्य रुत्वे प्रकृतसूत्रेण रोर्यत्वे देवायिह इति रूपम्। 'लोपः शाकल्यस्य' इति योगेन पक्षे यकारलोपे देव

---

* अत्र काशिका-भोभगोअघोअपूर्वस्य योऽशीत्यस्मिन् प्राप्ते उत्वं विधीयते। रुत्वमस्याश्रयत्वात्पूर्वत्रासिद्धमित्यसिद्ध न भवति । अत इति किम्। अग्निरत्र। तपरकरण किम्। वृक्षा अत्र। सानुबन्धग्रहण किम् स्वरत्र प्रातरत्र। अति इत्येव । वृक्ष इह । तस्यापि तपरत्वादत्र न भवति । वृक्ष आश्रितः। अप्लुतादिति किम् । सुस्रोता३ अत्र न्वसि । अप्लुत इति किम्। तिष्ठतु पय आ३श्विन्। अत्र प्लुतस्यासिध्दत्वादुत्व प्राप्नोति इति अप्लुतादप्लुत इत्युच्यते।

इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाता । तेषा रोर्यत्वे कृते ॥ **हलि सर्वेषाम्** । ८ । ३ । २२ । भोभगोअघोअपूर्वस्य यस्य लोपः स्याद्धलि । भो देवाः । भगो नमस्ते । अघो याहि ॥ **रोऽसुपि** । ८ । ३ । ६९ । अह्नो रेफादेशो न तु सुपि । अहरहः, अहर्गणः ॥ **रो रि** । ८ । ३ । १४ । रेफस्य रेफे परे लोपः ॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः** ।६।३।१११। ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घ । पुना रमते, हरी रम्यः, शभू राजते । अणः किम् । तृढः, वृढः ॥

---

इह । **हलि सर्वेषामिति** । भोभगोअघोअपूर्वस्य इति वर्तते । व्योर्लघुप्रयत्न—इति पूर्वसूत्रात् यकारग्रहण 'लोपः शाकल्यस्य' इति सूत्रात् लोपः इति चानुवर्तते । सर्वेषा सर्वाचार्याणा मतेन । भोस् देवाः इति स्थिते सस्य यत्वे प्रकृतसूत्रेण यस्य लोपः । भो देवाः । एव भगो नमस्ते इत्यादि ॥ **रोऽसुपीति** । अह्नः इति वर्तते । 'असुपि' इति न पर्युदासः ।किंतु प्रसज्यप्रतिषेध इति दर्शयति — न तु सुपि । पर्युदासाश्रयणे सुब्भिन्ने प्रत्यये इत्यर्थः स्यात् , ततश्च अहर्वान् इत्यत्रैव रेफादशः स्यात् न तु 'अहर्भाति' इत्यत्र । अहरहः — अहनि अहनि इत्यर्थे नित्यवीप्सयोरिति द्वित्वम् । अह्ना गणः अहर्गणः ॥ पुनर् रमते इति स्थिते आह **रो रीति** । रः इति षष्ठी । लोपः इति वर्तते ॥ एतेन रलोपे जाते आह **ढ्रलोपे इति** । ढ् च रेफश्च ढ्रौ, तौ लोपयति इति ढ्रलोपः उपपदसमासः । ढलोपनिमित्ते (ढकारे) रेफलोपनिमित्ते (रकारे) च परत इत्यर्थः । ढलोपे रेफलोपे च पूर्वस्याणो दीर्घ इति न व्याख्येयम् । अन्यथा चयनीयमित्यत्र अनीयर्प्रत्ययस्य रेफस्य लोपे यकारादकारस्य दीर्घापत्तिः । पूर्वस्य अव्यवहितपूर्वस्येत्यर्थः । एव पुना रमते । सूत्रे अणः इति प्रत्याहारः पूर्वेण णकारेण । 'अणुदित्सवर्णस्य च' इति सूत्रे एव अण् परेण णकारेण इति व्याख्यातपूर्वत्वात् । तृढः 'तृहू हिंसायाम्' इति धातोः क्तप्रत्यये तृह् क्त इति स्थिते 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः इति तकारस्य धत्वे, तस्य च ष्टुत्वेन ढकारे, 'ढो ढे लोपः' इति पूर्वस्य ढकारस्य लोपे तृढ. इति रूपम्, अण्ग्रहणाभावे ऋकारस्य दीर्घत्वं स्यात् तत्तु नेष्यते । एव 'वृहू उद्यमने' इति धातोः वृढः इति रूपम् ॥ **मनस्** रथः इत्यत्र 'ससजुषो रुः' इति योगेन सकारस्य रुत्वे कृते मनर्

मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते । **विप्रतिषेधे परं कार्यम्** ।१।४।२। तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रोरीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ॥

**एतत्तदोः सु लोपोऽकोरनञ्समासे हलि** ।६।१।१३२। अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे । एष विष्णुः, स शंभुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असश्शिवः । हलि किम् । एषोऽत्र ॥ **सोऽचि लोपे चेत्पादपूरणम्** ।६।१।१३४। स इत्यस्य सोर्लोपः स्यादचि

---

रथः इति जाते 'हशि च' इति सूत्रेण रोः उत्वं कर्तव्यम्, उत 'रो रि' इति सूत्रेण रकारस्य लोपः कर्तव्यः इति सशये, परत्वात् रकारलोपः स्यात् इति शंकते **विप्रतिषेध इति** । विप्रतिपूर्वात् सेधतेः घञि विप्रतिषेधशब्दः परस्परविरोधार्थ. । विरोधश्च तुल्यबलयोरेवेत्याह तुल्यबलविरोध इति । अत्र 'हशि च' इति सूत्र शिवो वन्द्यः इत्यादिस्थलेषु सावकाशम्, 'रो रि' इति सूत्र च पुना रमते इत्यत्र । एवं द्वयोरपि अन्यत्र सावकाशत्वात्, मनर् रथः इत्यत्र च युगपदसंभवात्, अन्यतरस्मिन् बाधनीये अष्टमाध्यायवर्तिनो 'रो रि' इति सूत्रस्य 'हशि च' इति षष्ठाध्यायवर्तिसूत्रापेक्षया परत्वम् । एव उत्व बाधित्वा लोपे प्राप्ते आह—**पूर्वत्रासिद्धमिति** । 'रो रि' इति सूत्रस्य त्रिपाद्यन्तर्भूतत्वेन 'हशि च' इति शास्त्रदृष्ट्या ऽसिद्धत्वम् । ततश्च मनर् रथः इत्यत्र रेफस्य उत्वमेव । ततः 'आद्गुणः' इति योगेन पूर्वपरयोर्गुणादेशे, मनोरथ इति रूपम् ॥ **एतत्तदोरिति** । 'अकोः' इति 'एतत्तदोः' इत्यस्य विशेषणम् । न विद्यते ककारो ययो· तौ अकौ, तयोः अकोः एतत्तदो । सु इति लुप्तषष्ठीक पृथक् पदम् एतत्तदोरित्यनेनान्वेति । अनञ्समासे इति प्रसज्यप्रतिषेधः । पर्युदासाश्रयणे नञ्समासभिन्नसमासे एव सुलोप· स्यात् न तु एष विष्णुः इत्यादिवाक्येषु । अकोः किम् । एषकः – 'अव्ययसर्वनाम्नामकच् प्राक टेः' इति योगेन अकचि कृते एषकः इति रूपम् । तत्तु न एतद्भिन्नं 'तन्मध्यपतितास्तद्ग्रहणेन गृह्यन्ते' इति न्यायात् । अतस्तत्पर्युदासाय आह अकोः इति ॥ **सो ऽचि-इति** । सस् इति

पादश्चेल्लोपे सत्येव पूर्येत । सेमामविड्ढि प्रभृतिम्, सैष दाशरथी रामः ॥ इति **विसर्गसन्धिप्रकरणम्** ॥

---

## अथ कृदन्ते कृत्यप्रक्रियाप्रकरणम् ॥

**धातोः** ।३।१।९१। आतृतीयाध्यायसमाप्त्यन्त ये प्रत्ययास्ते धातोः परे स्युः । कृदतिङिति कृत्संज्ञा ॥ **वाऽसरूपोऽस्त्रियाम्** ।

---

प्रथमान्तं शब्दस्वरूपपर । ततः षष्ठ्या लुक् । सु लोपः इति चानुवर्तते । सेमाम-विड्ढि प्रभृति य ईशिषे । (ऋ० २–२४–१) अत्र द्वादशाक्षरपादा जगती छन्दः । सस्य लोपेऽसति त्रयोदशाक्षराणि भवेयुः । हे बृहस्पते स त्वं इमा अस्मदीया प्रभृति प्रकर्षेण भृता स्तुति अविड्ढि प्राप्नुहि । ' अविड्ढि ' इति अवतेः प्राप्त्यर्थस्य लोटि छादस रूपम् ' इति ऋग्वेदभाष्ये । ' पादशब्देन ऋक्पाद एवेह गृह्यते ' इति वामनः । ' अविशेषाच्छ्लोकपादोऽपि ' इत्यपरे । यथा सैष दाशरथी रामः । **इति विसर्गसन्धिप्रकरणम्** ।

## अथ कृदन्ते कृत्यप्रक्रियाप्रकरणम् ।

**धातोरिति** । अधिकारसूत्रमिद आ तृतीयाध्यायसमाप्तेरनुवर्तते । तेन तृतीयाध्यायपरिसमाप्तिपर्यन्त निर्दिष्टाः प्रत्यया धातोर्भवन्ति इति वेदितव्यम् । अस्मिन्नधिकारे कृतस्तिङश्च निर्दिश्यन्ते । तेन सर्वेषु कृत्प्रत्यय-विधायकसूत्रेषु धातोरित्यधिकारो वेदितव्यः ॥ **कृदतिङ् इति** । सन्निहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्सज्ञः स्यात् । तिङ् प्रत्याहारः ' तिप्तस्झि-सिप्थस्थमिब्वस्मस्तातांझथासाथान्ध्वमिड्वहिमहिङ् ' इत्यस्मिन् सूत्रे निर्दि-ष्टाना प्रत्ययाना वाचकः । " धातोः कर्मण समानकर्तृकादिच्छायाम् । " इति " धातोरेकाचो हलादेः क्रियासमभिहारे यङ् । " इति च द्वा अन्यौ धात्वधिकारौ वर्तेते । तत्र विहिताना तु प्रत्ययाना न कृत्सज्ञा ॥ **वाऽसरूप इति** । परिभाषेयम् । समान रूप यस्य स सरूप, न सरूपः असरूपः । ' नानुबन्धकृतमसारूप्यम् ' ।

३ । १ । ९४ । अस्मिन्धात्वधिकारेऽसरूपोऽपवादप्रत्यय उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना ॥ **कृत्याः** । ३ । १ । ९५ । ण्वुल्-तृचावित्यतः प्राक् कृत्यसंज्ञाः स्युः ॥ **कर्तरि कृत्** । ३ । ४ । ६७ ।

---

तेन कः अण् इति सरूपौ एव । असरूपः अपवादप्रत्ययः उत्सर्गस्य वा बाधको भवति । यथा ण्वुल्तृचौ उत्सर्गः । 'इगुपधज्ञाप्रीकिरः कः' इति सूत्रेण विहितः 'कः' अपवादः । तस्य ण्वुल्तृज्भ्या सारूप्याभावात् 'विक्षिप्' धातोस्त्रयोऽपि भवन्ति तेन विक्षेपकः विक्षेप्ता विक्षिपः इति त्रीणि रूपाणि । सरूपप्रत्ययस्तु नित्यं बाधकः । यथा 'कर्मण्यण्' इति सूत्रेण विहितस्य औत्सर्गिकस्य अणः 'आतोऽनुपसर्गे कः' इति योगेन विहितः 'क' प्रत्ययो नित्यं बाधकः । तेन गा ददातीत्यस्मिन् अर्थे गोदः इति कप्रत्ययान्तमेव रूपम् ॥ **अस्त्रियामिति** । अस्मिन् एव धात्वधिकारे स्त्रीत्वविवक्षाया धातोः क्तिन्नादयः केचन कृत्प्रत्यया भवन्ति ते 'स्त्रिया क्तिन् ।' (३–३–९४) इत्यादिषु सूत्रेषु निर्दिष्टाः । तेषु असरूपोऽपि अपवादप्रत्ययो नित्य उत्सर्गस्य बाधको भवति यथा 'स्त्रिया क्तिन् ।' इत्युत्सर्गस्य 'अ प्रत्ययात्' इत्यपवादो बाधक एव भवति तेन कृधातोः सन्नन्तात् चिकीर्षा इत्येव रूपम् ॥ **कृत्या इति** । अधिकारसूत्रमिद 'ण्वुल्तृचौ' (३ – १ – १३३) इत्यतः प्रागनुवर्तते । अधुना कृत्यानामर्थं निर्दिशति । **कर्तरि कृदिति** । कर्तरि इति अर्थनिर्देशार्थं सप्तमी । यत्र अर्थादेशो नास्ति तत्रेदमुपतिष्ठते ॥ कृत्यप्रत्ययाना कृत्सज्ञाऽपि वर्तते तेन तेषा कर्त्रर्थे प्राप्ते आह **तयोरेवेति** । पूर्वसूत्रे प्रयुक्तौ भावकर्मशब्दौ तच्छब्देन परामृश्येते । एवकार कर्त्रर्थस्यापकर्षणार्थः । एते प्रत्ययाः कर्तरि न भवन्तीत्यर्थः । कृत्याः कर्मणि यथा – कर्तव्यः कटो भवता । भावे यथा – स्थातव्य त्वया । क्तः कर्मणि – कृतः कटो भवता । भावे – आसित भवता । खलर्थाः – खल इव अर्थो येषा ते खल्युजादयः । ते कर्मणि यथा – ईषत्करः कटो भवता, अत्र खल् । ईषत्पान. सोमो भवता, अत्र युच् । आतो युच् । खलोऽपवादः । भावे यथा – ईषदाढ्यभवं भवता, अत्र खल् ॥

कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते ॥ **तयोरेव कृत्यक्तखलर्थाः** । ३ । ४ । ७० । एते भावकर्मणोरेव स्यु ॥ **तव्यत्तव्यानीयरः** । ३ । १ । ९६ । धातोरेते प्रत्ययाः स्युः । एधितव्यम्, एधनीय त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वम् । चेतव्यश्चयनीयो वा धर्मस्त्वया । ( **केलिमर उपसंख्यानम् ।** ) पचेलिमा माषाः, पक्तव्या इत्यर्थः । भिदेलिमाः सरलाः । भेत्तव्याः । कर्मणि प्रत्ययः ॥ **कृत्यल्युटो बहुलम्** । ३ । ३ । ११३ । क्वचित्प्रवृत्ति क्वचिदप्रवृत्ति क्वचिद्विभाषा क्वचिदन्यदेव ॥ विधेर्विधान बहुधा समीक्ष्य चतुर्विध बाहुलकं वदन्ति ॥ १ ॥ स्नात्यनेनेति स्नानीयं चूर्णम् । दीयतेऽस्मै दानीयो विप्रः ॥

**अचो यत्** । ३ । १ । ९७ । अजन्ताद्धातोर्यत्स्यात् । चेयम् ॥ **ईद्यति** । ६ ।

---

**तव्यत्तव्यानीयरः इति** । तव्यत् तव्य अनीयर् एषा द्वन्द्वः । तकाररेफौ स्वरार्थौ । धात्वधिकारात् 'धातोः' इति वर्तते । एते प्रत्ययाः कृत्संज्ञकाः कृत्यसंज्ञकाश्च ॥ **भावे औत्सर्गिकमिति** । द्विबहुत्वाभावे एकवचनम्, सामान्ये नपुंसकमिति न्यायात् ॥ **केलिमर इति** । धातोः भावकर्मणोः केलिमर्प्रत्ययो भवति इत्यर्थः । केलिमरि ककाररेफौ इतौ । कित्त्व गुणवृद्धिबाधनार्थम् । रेफः स्वरार्थः । सरलाः वृक्षविशेषाः । वृत्तिकारः कर्मकर्तरि चायं (केलिमर्) इष्यते इत्याह तत् भाष्यविरुद्धत्वादुपेक्ष्यमत आह — कर्मणि प्रत्यय ॥ **कृत्यल्युट इति** । येभ्यो धातुभ्यो येष्वर्थेषु विहितास्ततोऽन्यत्रापि भवन्ति इत्यर्थः । यथा भावकर्मणोः कृत्या विहितास्ततोऽन्यत्रापि भवन्ति यथा स्नात्यनेन इति स्नानीय चूर्णम् । अत्र करणे अनीयर् । दीयतेऽस्मै इति दानीयो विप्रः । अत्र संप्रदाने अनीयर् । एव करणाधिकरणयोर्भावे च ल्युट् । ततोऽन्यत्रापि भवति यथा राजभोजनाः शालय, कर्मणि ल्युट् । बहुलग्रहणात् अन्येऽपि कृतो यथाप्राप्तं अभिधेय व्यभिचरन्ति । यथा पादाभ्या ह्रियते इति पादहारकः ॥ **अचो यदिति** । अचः इति धातोः इत्यस्य विशेषणम् । तदन्तविधिना अजन्तस्य धातोरित्यर्थः । तकारः इत् स्वरार्थः । अस्मिन् सूत्रेऽज्ग्रहण शक्यमकर्तुम् । 'ऋहलोर्ण्यत्' इति ऋहलन्तविषये विशेषविधानात् यत्प्रत्ययस्याप्रवृत्तेः । योगविभागोऽपि शक्योऽकर्तुम्

उपधाया इत्स्यादडि हलादौ क्ङिति । शिष्य, वृत्यः, आदृत्यः, जुष्यः ॥
**मृजेर्विभाषा** । ३ । १ । ११३ । मृजेः क्यब्वा । मृज्यः ॥

**ऋहलोर्ण्यत्** । ३ । १ । १२४ । ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् । कार्यम्, हार्यम्, धार्यम् ॥ **चजोः कु घिण्यतोः** । ७ । ३ । ५२ । चजोः कुत्व स्याद्धिति ण्यति च परे ॥ **मृजेर्वृद्धिः** । ७ । २ । ११४ । मृजेरिको वृद्धि सार्वधातुकार्धधातुकयोः । मार्ग्यः ॥ **भोज्यं भक्ष्ये** । ७ । ३ । ६९ । भोग्यमन्यत् ॥ **इति कृत्यप्रक्रिया** ॥

---

इत्युनुवर्तते । 'अङ्हलोः' इति सप्तमी अङि हलि च इत्यर्थः । 'क्ङिति' इति 'हलि' इति च प्रत्यये इत्यस्य विशेषणम् । शासिवसिघसीना चेति षत्वे शिष्यः इति रूपम् । सूत्रे वृ इति वृञो ग्रहणम्, न वृङः । वृत्य । 'वृङ् सभक्तौ' इत्यस्मात् वार्या ऋत्विजः । 'दृङ् आदरे' इति धातोः आदृत्यः । जुषी प्रीतिसेवनयोः-जुष्यः ॥ **मृजेर्विभाषेति** । 'मृजू शुद्धौ' इति धातोः क्यपि मृज्यः । पक्षे अग्रिमसूत्रेण ण्यति मार्ग्यः ॥ **ऋहलोरिति** । ऋहलोः इति पञ्चम्यर्थे षष्ठी । प्रकृतसूत्रेण मृज् ण्यत् इति स्थिते आह **चजोरिति** । चजोः इति षष्ठी । कु इत्यविभक्तिको निर्देशः । चजो घिण्यतोश्च न यथासख्यम् । सूत्रकारेणैव 'तेन रक्तं रागात्' इत्यत्र रञ्जधातोः घञि परतः जस्य कुत्वप्राप्त्या निष्पन्नस्य रागशब्दस्य प्रयोगात् । चजोः कुत्व – चकारस्य ककारः जकारस्य च गकार इत्यर्थं । घिति – पाकः त्यागः ( घञ् ) । 'मृजू शुद्धौ' इति धातोर्ण्यति, मृज् ण्यत् इति स्थिते प्रकृतसूत्रेण मृग् ण्यत् इति जाते आह **मृजेर्वृद्धिरिति** । 'इको गुणवृद्धी । ' ( गुणवृद्धिशब्दाभ्या यत्र गुणवृद्धी विधीयेते तत्र इक इति षष्ठ्यन्तं पदमुपतिष्ठते । ) इति परिभाषासूत्रेण इकः इति उपस्थितम् । मृजेः इति अवयवषष्ठी ॥ **भोज्यं भक्ष्ये इति** । भुजधातोः भक्ष्येऽर्थे ण्यति परतः कुत्वाभावो निपात्यते । भक्ष्ये इति किम् – भोग्य यन्न भक्ष्यम् किंतु उपभोग्यम् ॥ **इति कृत्यप्रक्रिया** ।

## अथ कृदन्ते कृत्प्रक्रियाप्रकरणम् ।

**ण्वुल्तृचौ** । ३ । १ । १३३ । धातोरेतौ स्तः । कर्तरि कृदिति कर्त्रर्थे ॥ **युवोरनाकौ** । ७ । १ । १ । यु वु एतयोरनाकौ स्तः । कारकः, कर्ता ॥ **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** । ३ । १ । १३४ । नन्द्यादेर्ल्यु-र्ग्रह्यादेर्णिनिः पचादेरच् स्यात् । नन्दयतीति नन्दनः । जनमर्दयतीति जनार्दनः । लवणः । ग्राही, स्थायी, मन्त्री । पचादिराकृतिगणः ॥

---

## अथ कृत्प्रक्रियाप्रकरणम् ।

**ण्वुल्तृचाविति** । धातोरिति वर्तते । ण्वुल्प्रत्यये णकारः वृद्ध्यर्थः । लकारः स्वरार्थः । तृच्प्रत्यये चकारः तृनोऽग्रहणार्थः ॥ **कर्तरि – इति** । कर्त्रर्थे कृत्प्रत्यया भवन्ति ॥ **युवोरनाकौ – इति** । यु वु एतयोः समाहारद्वन्द्व । सौत्रं पुस्त्वम्, तेन युवोरिति षष्ठी । यु वु इति प्रत्यययोः स्थाने यथासंख्यं अन अक इति आदेशौ भवतः । ‘डुकृञ् करणे’ इति धातोः ण्वुलि, कृ ण्वुल् इति स्थिते ‘अचो ञ्णिति ।’ इति योगेन ऋकारस्य वृद्धौ, वुस्थाने चाकादेशे, विभक्तिकार्ये च कृते कारकः इति रूपम् । एव तृचि परतः ‘सार्वधातुकार्धधातुकयोः ।’ इति सूत्रेण ऋकारस्य गुणादेशे कर्ता इति रूप सिद्धम् ॥ नन्दिग्रहि – इति । आदिशब्दः प्रत्येकमभिसंबध्यते । त्रिभ्यो गणेभ्यस्त्रयः प्रत्यया यथासंख्यं भवन्तीत्याह नन्द्यादेर्ल्युः । सूत्रे नन्दि इति ण्यन्तग्रहणम् । तदाह नन्दयति इति नन्दनः । आदिशब्दार्थ निर्दिशति – जनमर्दयति इति जनार्दनः । लुनाति इति लवणः । नन्द्यादिगणे निपातनाण्णत्वम् । ‘ग्रह उपादाने’ इति धातोः णिनिप्रत्यये ‘अत उपधायाः ।’ इति सूत्रेण उपधावृद्धौ ग्राही इति रूपम् । णिनिप्रत्यये अन्त्य इकारः उच्चारणार्थः । ‘ष्ठा गतिनिवृत्तौ’ इति धातोर्णिनिप्रत्यये ‘आतो युक्चिण्कृतोः ।’ इति युकि विभक्तिकार्ये च कृते स्थायी इति रूपं सिद्धम् । पचादिराकृतिगणः इति । पचादिगणीयाः सर्वे धातवो गणपाठे न पठिताः, ते लोकव्यवहारतो ज्ञातव्याः इत्यर्थः ॥

**इगुपधज्ञाप्रीकिरः कः** । ३ । १ । १३५ । एभ्यः कः स्यात् । बुधः, कृशः, ज्ञः, प्रियः, किरः ॥ **आतश्चोपसर्गे** । ३ । १ । १३६ । प्रज्ञः, सुग्लः ॥ **गेहे कः** । ३ । १ । १४४ । गेहे कर्तरि ग्रहेः कः स्यात् । गृहम् ॥

**कर्मण्यण्** । ३ । २ । १ । कर्मण्युपपदे धातोरण् प्रत्ययः स्यात् । कुम्भ करोतीति कुम्भकारः ॥ **आतोऽनुपसर्गे कः** । ३ । २ । ३ ।

---

**इगुपधज्ञा – इति** । इक् प्रत्याहारः । इक् उपधा यस्य स इगुपधः धातुः । किर् इति 'कॄ विक्षेपे' इति धातोः रूपम् । इगुपधः, ज्ञा, प्री, किर् इत्येषा द्वन्द्वे पञ्चम्येकवचनम् । कप्रत्यये कित्त्व गुणनिषेधार्थम् । इगुपधधातूनुदाहरति – 'बुध अवगमने' इति धातोः बुधः । 'कृश तनूकरणे' – कृश । 'ज्ञा अवबोधने' —जानातीति ज्ञः । ज्ञा क इति स्थिते 'आतो लोप इटि च ।' इति आलोपे ज्ञः इति रूपम् । 'प्रीञ् तर्पणे' प्रीणाति इति प्रियः । प्री क इति स्थिते 'अचि श्नुधातुभ्रुवा य्वोरियङुवङौ ।' इति योगेन इयङादेशे प्रिय इति रूपम् । कॄ क इति स्थिते 'ॠत इद्धातो ।' इति 'उरण् रपर ।' इति च ॠकारस्य इरादेशे किरः इति रूपम् ॥ **आतश्च—इति** । धातोरिति वर्तते । तदन्तविधिना आदन्तात् धातो· उपसर्गे उपपदे कः स्यात् । प्रकर्षेण जानातीति प्रज्ञः । सुग्लः – 'सु' उपपदात् ग्लैधातोः 'आदेच उपदेशेऽशिति ।' इति आत्वे कृते कप्रत्यये 'आतो लोप इटि च ।' ( अजाद्योरार्धधातुकयोः क्ङिदिटो परयोरातो लोपः स्यात् ।) इति सूत्रेण आलोपे सुग्लः इति रूपम् ॥ **गेहे क इति** । ग्रहः इति वर्तते । ग्रहधातो गेहे अर्थे कर्तरि कः प्रत्ययः स्यात् । प्रत्ययस्य कित्त्वात् 'ग्रहिज्या –' इति सूत्रेण ग्रहेः सप्रसारणम् । गृण्हाति धान्यादिकमिति गृहम् । तत्र तिष्ठन्ति इति लक्षणया गृहाः दाराः ॥ **कर्मण्यण् इति** । कर्मणि इति सप्तम्यन्तं पदम् उपपदम् । तत्रोपपदं सप्तमीस्थम् । धातोः इति वर्तते । कुम्भ करोति इति कुंभकारः । 'उपपदमतिङ् ।' सूत्रेण उपपदसमासोऽयम् । अण् उत्सर्गः । वक्ष्यमाणा· कादयो ऽ पवादाः ॥ **आतो ऽ नुपसर्गे–इति** । कर्मणि इति धातोः इति च वर्तते । तेन आदन्ताद्धातोरनुपसर्गात् इत्याद्यर्थः ।

आदन्ताद्धातोरनुपसर्गात्कर्मण्युपपदे कः स्यात् । आतो लोपः । अणोऽपवादः । गोदः धनदः कम्बलदः । अनुपसर्गे किम् । गोसदायः । ( **मूलविभुजादिभ्यः कः ।** ) मूलानि विभुजति मूलविभुजो रथः । आकृतिगणोऽयम् । महीध्रः, कुध्रः ॥

**चरेष्ट** । ३ । २ । १६ । अधिकरणे उपपदे । कुरुचरः ॥ **भिक्षासेनादायेषु च** । ३ । २ । १७ । भिक्षाचरः । सेनाचरः । आदायेति ल्यबन्तम् । आदायचरः ॥ **कृञो हेतुताच्छील्यानुलोम्येषु** । ३ । २ । २० । एषु द्योत्येषु करोतेष्टः स्यात् ॥ **अतः**

---

गा ददाति इत्यर्थे गोशब्दोपपदात् दाधातोः कप्रत्यये कित्त्वात् 'आतो लोपः—' इति सूत्रेण आतो लोपे गोदः इति रूपम् । एवं धन ददाति धनदः । कम्बल ददाति कबलदः । सूत्रे अनुपसर्गे इति पदस्य प्रयोजनमाह—गोसदायः । अत्र सम् इति उपसर्गस्य सत्त्वात् न कप्रत्ययः किन्तु औत्सर्गिकः अण् । तस्मिन् परतः 'आतो युक् चिण्कृतोः ।' इति युकि गोसदायः इति रूप सिद्धम् ॥ **मूलविभुजादिभ्य इति** । इद वार्तिक औत्सर्गिकाण्बाधनार्थम् । तादर्थ्ये चतुर्थी । मूलविभुजादिशब्दसिद्ध्यर्थम् इत्यर्थः ॥ मूलानि विभुजति विमर्दयति इति मूलविभुजो रथः ॥ **आकृतिगण इति** तेन मही धरति इति महीध्रः । कप्रत्ययस्य कित्त्वात् धृधातोः ऋकारस्य गुणाभावे 'इको यणचि ।' इति रेफे कृते महीध्रः इति रूपम् । एव कुः पृथ्वी ता धरतीति कुध्रः पर्वतः ॥ **चरेष्ट इति** । अधिकरणे इति वर्तते । कुरुषु चरति इति कुरुचरः । प्रत्ययस्य टित्त्व स्त्रिया ङीबर्थम् । कुरुचरी ॥ **भिक्षासेनेति ।** एषु उपपदेषु चरेष्टः स्यात् नात्र पूर्वसूत्रवत् अधिकरणमुपपदार्थः । भिक्षा चरति इति भिक्षाचरः । आदाय लब्ध द्रव्य गृहीत्वा चरतीति आदायचरः ॥ **कृञो हेतु—इति** । कर्मणि इति वर्तते । टप्रत्ययः कर्तृवाचकः । सूत्रे हेतुताच्छील्यानुलोम्येषु इति सप्तमी न उपपदवाचिका किंतु अर्थद्योतिका इत्याह- **एषु द्योत्येषु ।** हेतुः ऐकान्तिकं कारणम् । ताच्छील्यम् तत्स्वभावत्वम् । आनुलोम्यं—अनुकूलता । यशस्करी विद्या इति हेतौ द्योत्ये यशः कृ ट ङीप् इति

**कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य** । ८ । ३ । ४६ । आदुत्तर-स्यानव्ययस्य विसर्गस्य समासे नित्य सादेशः करोत्यादिषु परेषु । यशस्करी विद्या । श्राद्धकरः । वचनकर॰ ॥

**एजेः खश्** । ३ । २ । २८ । ण्यन्तादेजेः खश् स्यात् ॥ **अरुर्द्विषदज-न्तस्य मुम्** । ६ । ३ । ६७ । अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात्खिदन्ते परे न त्वव्ययस्य । शित्वाच्छबादिः । जनमेजयतीति जनमेजयः ॥ **प्रियवशे**

---

स्थिते आह **अतः कृकमि–इति** । अकारादुत्तरस्य अनव्ययविसर्जनीयस्य समासेऽनुत्तरपदस्थस्य नित्य सकारो भवति कृ कमि कंस–इत्यादिषु परतः । अयस्कारः अयस्कामः अयस्कसः इत्यादि । अनव्ययस्य इति किम् श्वःकारः । समासे इति किम् । यशः करोति । यशस्करी विद्या । यशोहेतुर्विद्या इत्यर्थः । ताच्छील्ये–श्राद्धकरः । आनुलोम्ये–वचनकरः ॥ **एजेः खश् इति** । एजेरिति ण्यन्तस्य कम्पनार्थस्य एजृधातोर्ग्रहणम् । न तु शुद्धस्य एजधातोः 'इक्श्तिपौ धातुनिर्देशे ।' इति इका निर्देशः । तथा सति खश् प्रत्यये शित्त्वस्य प्रयोजनाभावः, असत्यपि शित्त्वे तस्यैव रूपस्य लाभात्, अत आह ण्यन्तादेजे इति । खशि खकारो मुमर्थः, शकारः प्रत्ययस्य सार्वधातुकसञ्ज्ञालाभेन शबर्थः । 'तिङ्शित्सार्वधातुकम्' । 'कर्तरि शप्' । प्रकृतसूत्रे कर्मणि इति वर्तते । जन एज् णिच् खश् इति स्थिते आह **अरुर्द्विषदिति** । उत्तरपदे परतः इत्यर्थः पर्यवस्यति । अनव्ययस्येत्यपि अनुवर्तते तेन आह अरुषो–इत्यादि । मुम् आगमः । उकारः उच्चारणार्थः । मित्त्वात् 'मिदचोऽन्त्यात्परः ।' इति सूत्रेण उपपदस्य अन्त्यात्स्वरात्पर स निवेश्यः तेन जनम् एज इ शप् अ इति स्थिते 'सार्वधातुकार्धधातुकयोः ।' इति योगेन इकारस्य गुणे, अयादेशे, 'अतो गुणे ।' इति सूत्रेण शपः अकारस्य च स्थाने पररूपादेशे जनमेजयः इति रूप सिद्धम् । एव अरुन्तुद॰ द्विषन्तपः इत्यादीनि रूपाणि ॥ **प्रियवशे वद इति** । प्रिये वशे च कर्मणि उपपदे वदधातोः खच् प्रत्यय. स्यादित्यर्थः । खचि प्रत्यये खकारः पूर्ववत् मुमर्थः, चकारस्तु खशो व्यावृत्त्यर्थः । 'द्विषत्परयोस्तापे ।'

**वदः खच्** । ३ । २ । ३८ । प्रियवदः वशवदः ॥ **आत्ममाने खश्च** । ३ । २ । ८३ । स्वकर्मके मनने वर्तमानान्मन्यतेः सुपि खश् स्यात् चाणिनिः । पण्डितमात्मानं मन्यते पण्डितमन्यः पण्डितमानी ॥

**अन्येभ्योऽपि दृश्यन्ते** । ३ । २ । ७५ । मनिन् क्वनिप् विच् एते प्रत्यया धातोः स्युः ॥ **नेड्वशि कृति** । ७ । २ । ८ । वशादेः कृत इण्न स्यात् । शॄ हिंसायाम् । सुशर्मा । प्रातरित्वा ॥ **विड्वनोरनुनासिकस्यात्** । ६ । ४ । ४१ । अनुनासिकस्यात्स्यात् । विजायत इति विजावा । ओणृ

---

इति उत्तरसूत्रे खचोऽनुवृत्त्या 'खचि ह्रस्वः' इति सूत्रेण तापेः उपधाह्रस्वो भवति ॥ **आत्ममान इति** । आत्मनः मानः मननं आत्ममानः । कर्मणि षष्ठी । कर्मणि इति मनः इति च वर्तते । सूत्रे चकारेण णिनि-प्रत्ययोऽनुकृष्यते । खशः शित्त्वेन सार्वधातुकत्वात् मनधातोश्च दिवादित्वात् खशः पूर्वं श्यन्विकरणो भवति । खशि पण्डितमन्य । णिनौ तु पण्डितमानी इति रूपम् ॥ **अन्येभ्योपीति** । पूर्वसूत्रे आदन्तधातुभ्य एते प्रत्यया विहिताः । अस्मिन् सूत्रे ततोऽन्यत्रापि भवन्ति इत्युच्यते । सूत्रे अपिशब्दः सर्वोपाधिव्यभिचारार्थः । तेन धीवा इत्यादिरूपाणि । दृश्यन्ते लोकव्यवहारे इति शेषः । शोभनं शृणाति इत्यर्थे सु शॄ मन् इति स्थिते मनिनः आर्धधातुकत्वात् 'आर्धधातुकस्येड् वलादेः ।' इति सूत्रेण वलादित्वात् इटः प्राप्तौ आह **नेड् वशीति** ॥ वश् प्रत्याहार । वशि कृति इति सप्तम्यौ षष्ठ्यर्थे । तदादिविधिना वशादेः कृतः इत्यर्थः । एव इटि प्रतिषिद्धे, ऋृकारस्य गुणे सुशर्मा इति रूपम् । प्रातरेति इत्यर्थे प्रातर इ क्वनिप् इति स्थिते क्वनिपः पित्कृत्प्रत्ययत्वात् 'ह्रस्वस्य पिति–' इति सूत्रेण पिति कृते प्रातरित्वा इति रूपम् ॥ **विड्वनोरिति** । विट् च वन् च विड्वनौ तयोः परतः धातोरनुनासिकस्य आकारः स्यात् । सूत्रे वन् इति वनिप्क्वनिपोः सामान्येन ग्रहणम् । 'जनी प्रादुर्भावे' इति धातोर्वनिप्प्रत्यये नकारस्य आकारः, ततः सवर्णदीर्घत्वे विजावा । ओणृ अपनयने । वनिपि परतः णकारस्याकारे ओकारस्य चावादेशे अवावा रूपम् । विच् प्रत्यये चकारः

अपनयने। अवावा। विच् । रुष रिष हिंसायाम् । रोट्, रेट्, सुगण्॥
**क्विप् च**। ३। २। ७६। अयमपि दृश्यते। उखास्रत्, पर्णध्वत्, वाहभ्रट्।

**सुप्यजातौ णिनिस्ताच्छील्ये** ।३। २। ७८। अजात्यर्थे सुपि धातोर्णिनिस्ताच्छील्ये द्योत्ये । उष्णभोजी ॥ **मनः** । ३ २। ८२। सुपि मन्यतेर्णिनिः स्यात् । दर्शनीयमानी ॥ **खित्यनव्ययस्य** ।६।३।६६।

---

स्वरार्थः, इकार उच्चारणार्थः, वकारस्य तु 'वेरपृक्तस्य।' इति लोपः । रुष् विच् इति स्थिते उपधागुणे, प्रत्ययलोपे, 'झलां जशोऽन्ते' इति सूत्रेण षकारस्य डकारे, ततः 'वावसाने।' इति सूत्रेण टकारे रोट् रूपं सिद्धम्। शोभनं गणयति इति सुगण्, गणेर्विच् ॥ **क्विप् चेति** । अन्येभ्योऽपि इत्यनुवर्तते । उखायाः क्वाथपात्रात् स्रंसते इत्यर्थे उखा स्रस् क्विप् इति स्थिते 'अनिदितां हल उपधायाः क्ङिति।' इति सूत्रेण नकारलोपे क्विब्लोपे च 'वसुस्रंसुध्वंस्वनडुहां दः' इति सकारस्य दत्वे 'वाऽवसाने।' इति चर्त्वे उखास्रत् रूपम् । एवं पर्णात् ध्वंसते इति पर्णध्वत् । वाहात् भ्रश्यति इति वाहभ्रट्, भ्रश् धातोः पूर्ववत् नकारलोपे 'व्रश्चभ्रस्जसृज-मृजयजराजभ्राजच्छशां षः ।' इति सूत्रेण शकारस्य षत्वे, तस्य च डत्वे झलां जश् झशि इति वाऽवसाने इति चर्त्वे च वाहभ्रट् इति रूपम्॥ **सुप्यजाता इति** । अजातौ सुपि इति उपपदनिर्देशः अजात्यर्थे सुबन्ते उपपदे इत्यर्थः। ताच्छील्ये इत्यर्थनिर्देशः। उष्णं भोक्तुं शीलमस्येति उष्णभोजी। उष्णशब्दः गुणवाचकः न जातिवाचकः ॥ **मन इति**। सुपि णिनिरिति वर्तते । मनः इति मन्यतेर्ग्रहणं न तु मनुतेः बहुलग्रहणानुवृत्तेः । दर्शनीयं मन्यते इति दर्शनीयमानी ॥ **खित्यनव्ययस्येति** । उत्तरपदे इति वर्तते तेन खिदन्ते उत्तरपदे इत्यर्थः पर्यवस्यति । ह्रस्वः इति चानुवर्तते। आत्मानं कालीं मन्यते इत्यर्थे काली मन् श्यन् खश् इति स्थिते प्रकृतसूत्रेण पूर्वपदस्य ईकारस्य ह्रस्वे प्रत्ययस्य खित्त्वान्मुमि च कृते कालिमन्या इति रूपम् अनव्ययस्येति किम् । दिवामन्या रात्रिः । इदं सूत्रं 'आत्ममाने खश्च ।' इत्यनंतरमेवोदाहार्यम् । आत्ममाने एव खश्प्रत्ययप्रयोगात् ।

पूर्वपदस्य ह्रस्वः । कालिमन्या ॥ **करणे यजः** ॥ ३ । २ । ८५ । करणे उपपदे भूतार्थयजेर्णिनिः कर्तरि । सोमेनेष्टवान् सोमयाजी । अग्निष्टोमयाजी ॥

**दृशेः क्वनिप्** । ३ । २ । ९४ । कर्मणि भूते । पारं दृष्टवान् पारदृश्वा ॥ **राजनि युधि कृञः** । ३ । २ । ९५ । क्वनिप् स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान् राजयुध्वा, राजकृत्वा ॥ **सहे च** । ३ । २ । ९६ । कर्मणीति निवृत्तम् । सह योधितवान् सहयुध्वा । सहकृत्वा ॥

**सप्तम्यां जनेर्डः** । ३ । २ । ९७ । **तत्पुरुषे कृति बहुलम्** । ६ । ३ । १४ । ङेरलुक् । सरसिज, सरोजम् ॥ **उपसर्गे च संज्ञायाम्** । ३ । २ । ९९ । प्रजा स्यात्सन्ततौ जने ॥

---

**करणे यज इति** । करणे इति सप्तमी उपपदवाचिका । भूते इति अधिकारोऽत्र वर्तते, तेन आह – भूतार्थयजेः ॥ णिनिरिति वर्तते । प्रत्ययस्य णित्त्वात् । 'अत उपधायाः ।' इति सूत्रेण यजेरुपधाया अकारस्य वृद्धिः । **दृशेः क्वनिप् इति** । कर्मणि इति भूते इति च वर्तते । कर्मण्युपपदे भूतार्थदृशेः क्वनिप् प्रत्ययः । ककारः गुणवृद्धिनिषेधार्थः, पकारः कृधातोः तुगर्थः ॥ **राजनि युधीति** । राजनि राजशब्दे उपपदे इत्यर्थः युधिकृञ् इत्यनयोः समाहारद्वन्द्वात्पञ्चमी । क्वनिप् अनुवर्तते । राजनि कर्मण्युपपदे भूतार्थात् युधेः कृञश्च क्वनिप् । युधेरकर्मकत्वात् कथं तस्य राजशब्दः कर्म स्यात् इत्यत आह – युधिरन्तर्भावितण्यर्थः, युधेर्णिजन्तमत्र ग्राह्यमित्यर्थः । राजानं कृतवान् राजकृत्वा, क्वनिपः पित्त्वात् तुक् । **सहे चेति** । सहशब्दस्य कर्मत्वासम्भवादाह कर्मणि इति निवृत्तम् । युधिकृञः इति क्वनिप् इति च वर्तते । सहशब्दे उपपदे युधिकृञः क्वनिप् प्रत्ययः ॥ **सप्तम्यामिति** । सप्तम्यन्ते उपपदे भूतार्थात् जनेः डः । सरसि जायते इत्यर्थे सरःशब्दे उपपदे जनधातोः डप्रत्यये आह – **तत्पुरुष इति** । तत्पुरुषे समासे कृदन्ते उत्तरपदे सप्तम्या बहुलमलुग्भवति । डप्रत्ययस्य डित्त्वात् अत्र भसंज्ञाऽभावेऽपि जनधातोः टेर्लोपः । बहुलम् किम् – सरोजम् ॥ **उपसर्गे इति** । उपसर्गे चोपपदे जनेर्डप्रत्ययो भवति संज्ञाया विषये । समुदायोपाधिः संज्ञा इति काशिकायाम् । समुदायः उपाधिः संकेताश्रयः यस्याः ।

**क्तक्तवतू निष्ठा** । १ । १ । २६ । एतौ निष्ठासञ्ज्ञौ स्तः ॥ **निष्ठा** । ३ । २ । १०२ । भूतार्थवृत्तेर्धातोर्निष्ठा स्यात् । तत्र तयोरेवेति भावकर्मणोः क्तः । कर्तरि कृदिति कर्तरि क्तवतुः । उकावितौ । स्नात मया । स्तुतस्त्वया विष्णुः । विश्व कृतवान् विष्णुः ॥

**रदाभ्यां निष्ठातो नः पूर्वस्य च दः** । ८ । २ । ४२ । रदाभ्या परस्य निष्ठातस्य नः स्यान्निष्ठापेक्षया पूर्वस्य धातोर्दस्य च । शॄ हिसायाम् । ॠत इत् । रपरः । णत्वम् । शीर्णः, भिन्नः, छिन्नः ॥ **सयोगादेरातो धातोर्यण्वतः**

---

यत्रावयवेभ्यो न तदर्थोत्पत्तिः किंत्ववयविन एवेत्यर्थः ॥ निष्ठासज्ञा व्याचष्टे— **क्तक्तवतू निष्ठेति** । क्तश्च क्तवतुश्च क्तक्तवतू । ककारः गुणवृद्धिबाधनार्थः । उकारः स्त्रिया उगितश्चेति सूत्रेण ङीबर्थः ॥ **निष्ठेति** । भूते इति धातोरिति चाधिकृतम् । तेनाह भूतार्थवृत्तेर्धातो निष्ठा स्यात् । ‘ तयोरेव कृत्यक्तखलर्थाः ’ इति सूत्रे क्तस्यैव ग्रहणात् क्तः अकर्मकेभ्य. भावे, सकर्मकेभ्यस्तु कर्मणि प्रयोज्यः । क्तवतुस्तु ‘ कर्तरि कृत् ’ इति सूत्रेण कर्तर्येव ॥ **रदाभ्यामिति** । रदाभ्या इति पञ्चमी । ताभ्या परं इत्यर्थः । अकारौ उच्चारणार्थौ । रेफदकाराभ्या तकारो विशेष्यते, न निष्ठा । तेन यदा रेफदकाराभ्या परत अव्यवहितः तकारो दृश्यते, तदैव तस्य नत्वम् न तु चरितमित्यादौ । पूर्वस्य च दः – निष्ठातः पूर्वस्य दकारस्य नः स्यादित्यर्थः । ‘ शॄ हिसायाम् ’ इति धातोः क्ते परे ‘ ॠत इद् धातोः । ’ इति सूत्रेण ॠकारस्य इकारे ‘ उरण् रपरः ’ इति रपरे च कृते प्रकृतसूत्रेण तकारस्य नत्वे शिर् न इति स्थिते ‘ हलि च । ’ ( रेफवान्तस्य धातोरुपधाया इको दीर्घो हलि । ) इति सूत्रेण दीर्घे शीर्णः इति रूपम् । एव ‘ भिदिर् विदारणे ’ इति धातोः भिन्नम्, ‘ छिदिर् द्वैधीकरणे ’ इत्यस्मात् छिन्नम् ॥ **संयोगादेरिति** । निष्ठातो नः इत्यनुवर्तते । संयोग आदिर्यस्य स सयोगादिः । आतः इति धातोः इत्यस्य विशेषणम्, तदन्तविधिना आदन्तात् धातोरित्यर्थः । यण् प्रत्याहारः सोऽस्त्यस्येति यण्वान् तस्मात् धातोः । ‘ द्रा कुत्साया गतौ, स्वप्ने च ’ – द्राणः । ‘ ग्लै हर्षक्षये ’ ग्लानः

।८।२।४३। निष्ठातस्य नः स्यात् । द्राणः, ग्लानः, ॥ **ल्वादिभ्यः** ।८।२।४४। एकविंशतेर्ल्वादिभ्यः प्राग्वत् । लूनः । ज्याधातुः । ग्रहिज्येति सम्प्रसारणम् ॥ **हलः** ।६।४।२ । अङ्गावयवाद्धलः पर यत्सम्प्रसारण तदन्तस्य दीर्घः । जीनः ॥ **ओदितश्च** ।८।२।४५। भुजो भुग्नः । टुओश्वि उच्छूनः ॥

---

सयोगादेरिति किम् । यातः । आतः इति किम्, च्युतः । धातोरिति किम् निर्वातः । यण्वत इति किम् स्नातः ॥ **ल्वादिभ्य इति** । निष्ठातो नः इति वर्तते 'लूञ् छेदने' लूनः ॥ 'ज्या वयोहानौ' इति धातोः क्तप्रत्यये कित्त्वात् ग्रहिज्या – इति सम्प्रसारणेन यकारस्य इकारे 'सम्प्रसारणाच्च' इति योगेन पूर्वपरयोः पूर्वरूपादेशे, जि त इति स्थिते ल्वादित्वात् तकारस्य नकारे कृते आह **हल इति** । हलः इति पञ्चमी । हलः पर इत्यर्थः । संप्रसारणस्य इति अनुवर्तते । अगस्य इति अधिकृतं पदमत्रावृत्त विज्ञेयम् । तत्र एक 'अंगस्य' इति पद हलः इत्यनेन अन्वेति । अवयवार्था षष्ठी, तेन 'अगावयात् हलः परं यत् सम्प्रसारणम्' इत्यर्थो लभ्यते । द्वितीय 'अगस्य' इति पदं संप्रसारणस्य इत्यनेनान्वेति । तदन्तविधिना 'सम्प्रसारणान्तस्य अगस्य' इत्यर्थः । दीर्घः इत्यपि अनुवर्तते । सकलितमर्थ निर्दिशति–अगावयवाद् हलः इति ॥ **ओदितश्चेति** । धातोरिति निष्ठातो नः इति चानुवर्तते । ओकारः इत् यस्मिन् तस्मात् धातोः निष्ठातस्य नः इत्यर्थः । 'भुजो कौटिल्ये' (६ प.) भुग्नः । 'टुओश्वि गतिवृद्ध्योः' टुशब्दः इत्, ट्वितोऽथुच् इति अथुजर्थः । ओकारोऽपि इत्, 'ओदितश्च' इति नत्वार्थः । उत्पूर्वात् श्विधातोः क्तप्रत्यये उत् श्वि क्त इति स्थिते यजादित्वात् 'वचिस्वपियजादीना किति' इति सम्प्रसारणे 'सम्प्रसारणाच्च' इति पूर्वरूपे 'हलः' इति दीर्घत्वे च कृते उत् शू त इति स्थिते प्रकृतसूत्रेण निष्ठातस्य नत्वे, 'स्तोः श्चुना श्चुः ।' इति उपसर्गतकारस्य चकारे च कृते उच्छूनः इति रूपम् ॥ **शुषः क इति** । 'शुष शोषणे' इति धातोः निष्ठातस्य कः भवति । शुष्कः ॥ **पचो व इति** । 'डुपचष् पाके' । डुकारः इत् 'ड्वितः क्त्रिः' 'क्त्रेर्मम्नित्यम्' इति सूत्राभ्या विहितत्रिमप्रत्ययार्थः । अस्मात् धातोः निष्ठा-

**शुषः कः** । ८ । २ । ५१ । निष्ठातस्य कः । शुष्कः ॥ **पचो वः** । । ८ । २ । ५२ । पक्वः । क्षै हर्षक्षये ॥ **क्षायो मः** । ८ । २ । ५३ । क्षामः ॥

**निष्ठायां सेटि** । ६ । ४ । ५२ । णेर्लोपः । भावितः भावितवान् । दृह वृद्धौ ॥ **दृढः स्थूलबलयोः** । ७ । २ । २० । स्थूले बलवति च निपात्यते ॥ **दधातेर्हिः** । ७ । ४ । ४२ । तादौ किति । हितम् ॥ **दो-दद्घोः** । ७ । ४ । ४६ । घुसज्ञकस्य दा इत्यस्य दथ् स्यात्तादौ किति ।

---

तस्य वः स्यात् । एव पच् व इति जाते प्रकृतसूत्रस्य त्रिपाद्यन्तर्गतत्वेन वकार-स्यासिद्धत्वात्, झल्परत्वात् 'चोः कुः' इति चकारस्य ककारे कृते पक्वः इति रूपम् ॥ **क्षायो म इति** । 'क्षै क्षये' इति धातोः निष्ठातस्य मः स्यादित्यर्थः । क्तप्रत्यये 'आदेच उपदेशेऽशिति' इति ऐकारस्य आकारे विहिते प्रकृतसूत्रेण निष्ठातस्य मकारे कृते क्षामः इति रूपम् ॥ **निष्ठायां सेटि—इति** । णेः इति लोपः इति च वर्तते । निष्ठाया सेटि प्रत्यये परतः णेर्लोपः । णिजन्तात् भूधातोः क्तप्रत्यये भू णिच् क्त इति स्थिते, णिचः णित्त्वात् 'अचो ञ्णिति ।' इति वृद्धौ ऊकारस्य औकारे, तस्य च 'एचोऽयवायावः ।' इति आवादेशे, 'आर्धधातुकस्येड्वलादेः ।' इति निष्ठातस्य इडागमे प्रकृतसूत्रेण णिचो लोपे भावितः इति रूपम् । क्तवतुप्रत्यये, भावितवान् ॥ **दृढः स्थूलबलयोरिति** । बलमस्यास्तीति बलः स्थूले बलवति चार्थे दृढः इति निपात्यते । किमत्र निपा-त्यते । दृह धातोः क्तप्रत्यये 'आर्धधातुकस्येड् वलादेः ।' इति प्राप्तस्य इटोऽभावः, तकारस्य ढत्व, ततो हस्य लोपो निपात्यते । दृहिः प्रकृतिश्चेत् 'इदितो नुम् धातोः ।' इति प्राप्तस्य नुमोऽप्यभावः अनेन निपात्यते, एवं धातुद्वयादपि दृढ इत्येव रूपम् ॥ **दधातेर्हिरिति** । दधातेः इति पञ्चमी । अत्र श्तिपा निर्देशः 'धेट् पाने' इति धातोर्वर्जनार्थः । अन्यथा 'धातः हिः' इत्युक्ते 'आदेच उपदे-शेऽशिति ।' इत्यनेन धेटोऽपि ग्रहणं स्यात् । हिः इत्यनेकाल्वात् सर्वादेशः । ति किति इति वर्तते । तादौ किति इत्यर्थः ॥ **दो दद्घोरिति** । 'दाधा घ्वदाप् ।' इति सूत्रेण 'डुदाञ् दाने' इत्यस्य घुसज्ञा । घोः इति दः इत्यस्य विशेषणम् । दः इति षष्ठी । ति किति इति वर्तते । दथ् इति थान्त आदेशः ।

चर्त्वम् । दत्तः ॥

**लिटः कानज्वा** । ३ । २ । १०६ । **क्वसुश्च** । ३ । २ । १०७ । लिटः कानच् क्वसुश्च वा स्तः । तङानावात्मनेपदम् । चक्राणः ॥ **म्वोश्च** । ८ । २ । ६५ । मान्तस्य धातोर्नत्वं म्वोः परतः । जगन्वान् ॥

**लटः शतृशानचावप्रथमासमानाधिकरणे** । ३ । २ । १२४ ।

---

सकलितमर्थमाह **घुसंज्ञकस्येति** । दा क्त इति स्थिते प्रकृतसूत्रेण दथ् त इति जाते 'खरि च ।' इति थकारस्य चर्त्वे दत्तः इति रूपम् । सूत्रे दः इति किमर्थम् । शृणु तस्याभावे धेटोऽपि घुसंज्ञत्वात् दथ् आदेशः स्यात् स तु नेष्यते यतः धेटः धीतः इति रूपम् । घोरिति किम् । 'दाप् लवने'—दात बर्हिः । 'दैप् शोधने'—अवदात मुखम् । **लिटः कानज्वा । क्वसुश्चेति** ॥ लिटः कानच् क्वसुः इत्येतौ आदेशौ विभाषया भवतः । कानच्प्रत्यये ककारचकारौ इतौ । तङानावात्मनेपदम्' इति सूत्रेण आत्मनेपदे एवाय प्रयोज्यः । वा किम् । पक्षे लिटः श्रवणार्थम् । 'वाऽसरूपविधिर्लादेशेषु न प्रवर्तते' इति ख्यापनार्थं वा । क्वसुप्रत्यये ककार उकारश्चेतौ । ककारो गुणवृद्धिनिषेधार्थः । उकारः स्त्रिया 'उगितश्च' इति ङीबर्थ. । 'डुकृञ् करणे' इति धातोः लिटि प्रकृतसूत्रेण कानच्प्रत्यये, कृ आन इति जाते, 'लिटि धातोरनभ्यासस्य ।' इति धातोर्द्वित्वेऽभ्यासकार्ये च कृते, चकृ आन इति जाते 'इको यणचि' इति यणि, 'रषाभ्यां नो णः समानपदे ।' इति णत्वे चक्राणः इति रूपम् । सूत्रद्वयेऽपि छन्दसि इति अनुवृत्त्या "क्वसु-कानचौ छादसाविति त्रिमुनिमतम् । कवयस्तु बहुल प्रयुञ्जते 'त तस्थिवासं नगरोपकण्ठे' इत्यादि ।" ( सि कौ ) **म्वोश्चेति** । मो नो धातोः इति वर्तते । मः इति षष्ठी धातोः इत्यस्य विशेषणम् । तदन्तविधिना मान्तस्य 'धातोः' इत्यर्थः । नः इति प्रथमा । म्वोः इति सप्तमी, मकारे वकारे च परतः । तेन मान्तस्य धातोः मस्य नकारादेशः स्यान्मकारे नकारे च परे । गम्लृधातोः लिटि क्वस्वादेशे गम् वस् इति स्थिते द्वित्वे प्रकृतसूत्रेण मकारस्य नत्वे विभक्तिकार्ये च जगन्वान् इति रूपम् ॥ **लटः शतृशानचा इति** । वर्तमाने विहितस्य लटः शतृ शानच् इत्येतौ आदेशौ भवतः, अप्रथ-

अप्रथमान्तेन समानाधिकरणे लट एतौ वा स्तः। शबादिः पचन्तं चैत्र पश्य ॥ **आने मुक्** ।७।२।८२। अदन्ताङ्गस्य मुगागमः स्यादाने परे। पचमान चैत्र पश्य । लडित्यनुवर्तमाने पुनर्लड्ग्रहणात्प्रथमासामानाधिकरण्येऽपि क्वचित् । सन्द्विजः ॥ **विदेः शतुर्वसुः** ।७।१।३६। वेत्तेः परस्य शतुर्वसुरादेशो वा। विदन्, विद्वान् ॥ **तौ सत्** ।३।२।१२७। तौ शतृशानचौ सत्सञ्ज्ञौ स्त ॥

---

मान्तेन सामानाधिकरण्ये सति। 'तङानावात्मनेपदम्' इति सूत्रेण आत्मनेपदे शानच्। परस्मैपदे तु शतृप्रत्ययः। उभयोरपि शित्त्वात् सार्वधातुकत्वेन तत्पूर्वं शबादयो विकरणा भवन्ति। 'डुपचष् पाके' इति धातोर्लटि शत्रादेशे शपि, पच् अ अ इति जाते, 'अतो गुणे' इति पररूपत्वे पचत् इति रूपम्, तस्य द्वितीयैकवचन पचन्त चैत्रमित्यनेनान्वेति। 'वर्तमाने लट्।' इति पूर्वसूत्रात् लटोऽनुवृत्तिसभवे पुनर्लड्ग्रहण शतृशानचौ क्वचित्प्रथमासमानाधिकरणेऽपि भवत इति द्योतनार्थम्। विद्यते ब्राह्मणः इत्यर्थे विद्यमानो ब्राह्मणः इत्यादि-प्रयोगाः॥ पचधातोः शानचि, तस्य शित्त्वात् शपि कृते, पच अ आन इति स्थिते आह **आने मुगिति**। अगस्य इति अतः इति च वर्तते। तदन्त-विधिना अदन्तागस्य इत्यर्थः। मुक् कित्त्वात् अन्तादेशः। उकारः उच्चारणार्थः। एतेन पचमानरूपसिद्धिः ॥ **विदेः शतुर्वसुरिति**। विदेः इति पञ्चमी। शतुरिति स्थानषष्ठी। वा इत्यनुवर्तते। ननु वसुः इत्यत्र उकारः किमर्थः। न ङीबर्थः। स्थानिवदादेशः इति न्यायेन शतुः ऋदित्त्वेनापि ङीप्प्राप्तिः स्यात् इति चेत्। वसोरुकारकरण वसोः सप्रसारणमित्यत्र क्वसोरपि सामान्य-ग्रहणार्थम्। अन्यथा वसः सप्रसारणमित्युच्यमाने निरनुबन्धकत्वादस्यैव ग्रहणं स्यात्। **तौ सदिति**। तौ इति शतृशानचौ व्यपदिश्येते। सत् इति तयोः सञ्ज्ञा। सा च 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन।' इत्यादिसूत्रेषु प्रयुक्ता॥ **लटः सद्वेति**। लटः स्थाने शतृशानचौ वा स्तः। व्यवस्थितविभाषा लक्ष्यानुसारेण व्यवस्थया प्रवृत्ता विभाषा। तेन क्वचित् लटः शतृशानचौ नित्यं भवतः, यथा अप्रथमासामानाधिकरण्ये, प्रत्ययोत्तरपदयोः, सबोधने,

**लृटः सद्वा** ।३।३।१४। व्यवस्थितविभाषेयम्। तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः संबोधने लक्षणहेत्वोश्च नित्यम्। करिष्यन्त करिष्यमाणं पश्य ॥

**आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** ।३।२।१३४। क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ॥ **तृन्** ।३।२।१३५। कर्ता कटान् ॥ **जल्पभिक्षकुट्टलुण्टवृङः षाकन्** ।३।२।१५५। **षः**

---

लक्षणहेत्वोश्च। एतेषु स्थलेषु यथा लटः सद् भवति तथा लृटः स्थानेऽपि। अप्रथमासामानाधिकरण्ये, यथा करिष्यन्तं करिष्यमाण पश्य। प्रत्ययोत्तरपदयोः, यथा करिष्यतोऽपत्य कारिष्यतः, करिष्यन्ती भक्तिः करिष्यद्भक्तिः। सबोधने, हे करिष्यन्। लक्षणे – 'करिष्यमाणः सशर शरासनं वपुःप्रकर्षेण विडम्बितेश्वर. अतिष्ठत्' इति रवौ। हेतौ, अर्जयिष्यन् वसति। प्रथमासामानाधिकरण्येऽपि क्वचित् लृटः शतृशानचौ वा भवतः। देवदत्तः करिष्यति इत्यर्थे करिष्यन् करिष्यमाणो वा देवदत्तः॥ **आ क्वेरिति**। अधिकारसूत्रमिदम्। आङ् मर्यादाया अभिविधौ च प्रयुज्यते। अत्र अभिविधिरर्थः। भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् (३।२।१७७) इति सूत्रे क्विप् विहितः। इतः ऊर्ध्वं तत्सूत्रमभिव्याप्य अष्टाध्याय्या ये प्रत्यया विहितास्ते तच्छीलादिषु भवन्तीत्यर्थः। तत् शील स्वभावः यस्य स तच्छीलः। अनेन फलनिरपेक्षा प्रवृत्तिर्द्योत्यते। स धर्मः यस्य स तद्धर्मा, स्वधर्मो ममाय इति य. प्रवर्तते। त धात्वर्थं साधु करोति इति तत्साधुकारी ॥ **तृन्निति**। सर्वधातुभ्यः अय तच्छीलादिषु भवति। नकारः स्वरार्थ.। तच्छीले–सभावयिता बुधान्। तृनो योगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम्।' इति सूत्रेण षष्ठीप्रतिषेध.। तद्धर्मणि – मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम्। वधूमुण्डन स्वधर्म इति कुर्वन्ति ते। तत्साधुकारिणि – कर्ता कटान् ॥ **जल्पभिक्षकुट्टेति**। जल्पादिभ्यो धातुभ्यस्तच्छीलादिषु षाकन् प्रत्ययो भवति ॥ **षः प्रत्ययस्येति**। इत् इत्यनुवर्तते। प्रत्ययस्य ष इत्संज्ञः स्यात्। तस्य फल स्त्रिया 'षिद्गौरादिभ्यश्च।' इति ङीष्। नकारः

**प्रत्ययस्य** । १ । ३ । ६ । प्रत्ययस्यादिः ष इत्संज्ञः स्यात् । जल्पाकः, भिक्षाकः, कुट्टाकः, लुण्टाकः, वराकः, वराकी ॥

**सनाशंसभिक्ष उः** । ३ । २ । १६८ । चिकीर्षुः आशसुः, भिक्षुः ॥ **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्** । ३ । २ । १७७ । विभ्राट्, भाः ॥ **राल्लोपः** । ६ । ४ । २१ । रेफाच्छ्वोर्लोपः क्वौ झलादौ क्ङिति । धूः,

---

स्वरार्थः । 'जल्प व्यक्तायां वाचि' – जल्पाकः । 'भिक्ष भिक्षायामलाभे लाभे च' – भिक्षाकः । 'कुट्ट छेदनभर्त्सनयोः' – कुट्टाकः । 'लुटि स्तेये' लुण्टाकः । 'वृङ् सम्भक्तौ –' वराकः । स्त्रियां ङीप् वराकी ॥ **सनाशंसेति** । सन् इति सन्प्रत्ययान्तं इह गृह्यते न तु 'षणु दाने' 'षण सम्भक्तौ' च, यतः गर्गादिपाठे विजिगीषुशब्दः पठ्यते तत्साधकं त्वन्यत्सूत्रं न विद्यते । सन् आशस भिक्ष इत्येषां समाहारद्वन्द्वात् पञ्चमी । एभ्यः तच्छीलादिषु उप्रत्ययः स्यात् । सन्–चिकीर्षुः । 'आङः शसि इच्छायाम्' – आशसुः ॥ **भ्राजभासधुर्विद्युतेति** । एभ्योऽष्टभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् स्यात् । विपूर्वात् 'भ्राजृ दीप्तौ' इति धातोः प्रकृतसूत्रेण क्विपि, 'वेरपृक्तस्य ।' इति क्विपो लोपे, कृदन्तत्वात् प्रातिपदिकसंज्ञायां, सौ, हल्ङ्याब्भ्यो दीर्घात्– इत्यादिसूत्रेण सोर्लोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति जस्य षत्वे 'झलां जशोऽन्ते ।' इति षस्य डत्वे 'वावसाने ।' इति डस्य टत्वे विभ्राट् रूपम् । 'भासृ दीप्तौ' इति धातोः पूर्ववत् क्विपः सोश्च लोपे सकारस्य 'ससजुषो रुः ।' इति रुत्वे 'खरवसानयोः–' इति विसर्गे भाः इति रूपम् । 'धुर्वी हिंसायाम्' इति धातोः क्विपि आह । **राल्लोप इति** । छ्वोः इति क्विझलोः क्ङिति इति चानुवर्तते । छ्वोः इति षष्ठी लोपः इत्यनेन सबध्यते । रेफात्परयोः छकारवकारयोः लोपः स्यात् क्वौ झलादौ क्ङिति प्रत्यये । एतेन वकारलोपे क्विपश्च लोपे, सौ, तस्य लोपे, 'र्वोरुपधाया दीर्घ इकः ।' इति उपधाया दीर्घत्वे, रस्य विसर्गत्वे च विहिते धूः इति रूपम् । 'ऊर्ज बलप्राणयोः' इति चौरादिकात् धातोः ऊर्क् । चोः कुः (चवर्गस्य कवर्गः स्यात् झलि पदान्ते च ।) इति जस्य गत्वम् । 'पॄ पालनपूरणयोः' इति धातोः क्विपि तस्य लोपे, उदोष्ठ्यपूर्वस्येति

**लृटः सद्वा** । ३ । ३ । १४ । व्यवस्थितविभाषेयम् । तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः संबोधने लक्षणहेत्वोश्च नित्यम् । करिष्यन्तं करिष्यमाणं पश्य ॥

**आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु** । ३ । २ । १३४ । क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलादिषु कर्तृषु बोध्याः ॥ **तृन्** । ३ । २ । १३५ । कर्ता कटान् ॥ **जल्पभिक्षकुट्टलुण्टवृङः षाकन्** । ३ । २ । १५५ । **षः**

---

लक्षणहेत्वोश्च । एतेषु स्थलेषु यथा लटः सद् भवति तथा लृटः स्थानेऽपि । अप्रथमासामानाधिकरण्ये, यथा करिष्यन्त करिष्यमाण पश्य । प्रत्ययोत्तरपदयोः, यथा करिष्यतोऽपत्य कारिष्यतः, करिष्यन्ती भक्तिः करिष्यद्भक्तिः । सबोधने, हे करिष्यन् । लक्षणे – 'करिष्यमाणः सशर शरासनं वपुःप्रकर्षेण विडम्बितेश्वरः अतिष्ठत्' इति रघौ । हेतौ, अर्जयिष्यन् वसति । प्रथमासामानाधिकरण्येऽपि क्वचित् लृटः शतृशानचौ वा भवतः । देवदत्तः करिष्यति इत्यर्थे करिष्यन् करिष्यमाणो वा देवदत्तः॥ **आ क्वेरिति** । अधिकारसूत्रमिदम् । आङ् मर्यादाया अभिविधौ च प्रयुज्यते । अत्र अभिविधिरर्थः । भ्राजभासधुर्विद्युतोर्जिपृजुग्रावस्तुवः क्विप् ( ३ । २ । १७७ ) इति सूत्रे क्विप् विहितः । इतः ऊर्ध्वं तत्सूत्रमभिव्याप्य अष्टाध्याय्या ये प्रत्यया विहितास्ते तच्छीलादिषु भवन्तीत्यर्थः । तत् शील स्वभावः यस्य स तच्छीलः । अनेन फलनिरपेक्षा प्रवृत्तिर्द्योत्यते । स धर्मः यस्य स तद्धर्मा, स्वधर्मो ममाय इति यः प्रवर्तते । त धात्वर्थं साधु करोति इति तत्साधुकारी ॥ **तृन्निति** । सर्वधातुभ्यः अय तच्छीलादिषु भवति । नकारः स्वरार्थः । तच्छीले–सभावयिता बुधान् । तृनो योगे 'न लोकाव्ययनिष्ठाखलर्थतृनाम् ।' इति सूत्रेण षष्ठीप्रतिषेधः । तद्धर्मणि – मुण्डयितारः श्राविष्ठायना भवन्ति वधूमूढाम् । वधूमुण्डन स्वधर्म इति कुर्वन्ति ते । तत्साधुकारिणि – कर्ता कटान् ॥ **जल्पभिक्षकुट्टेति** । जल्पादिभ्यो धातुभ्यस्तच्छीलादिषु षाकन् प्रत्ययो भवति ॥ **षः प्रत्ययस्येति** । इत् इत्यनुवर्तते । प्रत्ययस्य ष इत्सज्ञः स्यात् । तस्य फल स्त्रिया 'षिद्गौरादिभ्यश्च ।' इति ङीप् । नकारः

**प्रत्ययस्य** । १ । ३ । ६ । प्रत्ययस्यादिः ष इत्संज्ञः स्यात् । जल्पाकः, भिक्षाकः, कुट्टाकः, लुण्टाकः, वराकः, वराकी ॥

**सनाशंसभिक्ष उः** । ३ । २ । १६८ । चिकीर्षुः आशसुः, भिक्षुः ॥ **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्** । ३ । २ । १७७ । विभ्राट्, भाः ॥ **राल्लोपः** । ६ । ४ । २१ । रेफाच्छ्वोर्लोपः क्वौ झलादौ क्ङिति । धूः,

---

स्वरार्थः । 'जल्प व्यक्तायां वाचि' – जल्पाकः । 'भिक्ष भिक्षायामलाभे लाभे च' – भिक्षाकः । 'कुट्ट छेदनभर्त्सनयो.' – कुट्टाकः । 'लुटि स्तेये' लुण्टाकः । 'वृङ् सभक्तौ –' वराकः । स्त्रियां ङीप् वराकी ॥ **सनाशंसेति** । सन् इति सन्प्रत्ययान्त इह गृह्यते न तु 'षणु दाने' 'षण सम्भक्तौ' च, यतः गर्गादिपाठे विजिगीषुशब्दः पठ्यते तत्साधक त्वन्यत्सूत्र न विद्यते । सन् आशस भिक्ष इत्येषा समाहारद्वद्वात् पञ्चमी । एभ्यः तच्छीलादिषु उप्रत्ययः स्यात् । सन्–चिकीर्षुः । 'आङः शसि इच्छायाम्' – आशंसुः ॥ **भ्राजभासधुर्विद्युतेति** । एभ्योऽष्टभ्यो धातुभ्यस्तच्छीलादिषु कर्तृषु क्विप् स्यात् । विपूर्वात् 'भ्राजृ दीप्तौ' इति धातोः प्रकृतसूत्रेण क्विपि, 'वेरपृक्तस्य ।' इति क्विपो लोपे, कृदन्तत्वात् प्रातिपदिकसंज्ञाया, सौ, हलङ्याब्भ्यो दीर्घात्– इत्यादिसूत्रेण सोर्लोपे 'व्रस्जभ्रस्जसृजमृजयजराजभ्राजच्छशा षः' इति जस्य षत्वे 'झला जशोऽन्ते ।' इति षस्य डत्वे 'वावसाने ।' इति डस्य टत्वे विभ्राट् रूपम् । 'भासृ दीप्तौ' इति धातोः पूर्ववत् क्विपः सोश्च लोपे सकारस्य 'ससजुषो रुः ।' इति रुत्वे 'खरवसानयोः–' इति विसर्गे भाः इति रूपम् । 'धुर्वी हिंसायाम्' इति धातोः क्विपि आह । **राल्लोप इति** । छ्वोः इति क्विझलोः क्ङिति इति चानुवर्तते । छ्वोः इति षष्ठी लोपः इत्यनेन सबध्यते । रेफात्परयोः छकारवकारयोः लोपः स्यात् क्वौ झलादौ क्ङिति प्रत्यये । एतेन वकारलोपे क्विपश्च लोपे, सौ, तस्य लोपे, 'र्वोरुपधाया दीर्घ इकः ।' इति उपधाया दीर्घत्वे, रस्य विसर्गत्वे च विहिते धूः इति रूपम् । 'ऊर्ज बलप्राणयोः' इति चौरादिकात् धातोः ऊर्क् । चोः कुः (चवर्गस्य कवर्गः स्यात् झलि पदान्ते च ।) इति जस्य गत्वम् । 'पॄ पालनपूरणयोः' इति धातोः क्विपि तस्य लोपे, उदोष्ठ्यपूर्वस्येति

विद्युत्, ऊर्क्, पूः । दृशिग्रहणस्यापकर्षाज्जवतेर्दीर्घः । जूः । ग्रावस्तुत् ।
(**क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च** ।) वक्तीति
वाक् । पृच्छतीति प्राट् । आयत स्तौतीत्यायतस्तूः कट प्रवते कटप्रूः ।
जूरुक्तः । श्रयति हरिं श्रीः ॥

**दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** । ३ ।
२ । १८२ । दाबादेः ष्ट्रन् स्यात्करणेऽर्थे । दात्यनेन दात्रम्, नेत्रम् ॥

---

ऋकारस्य उरि, पुर् इति जाते, सौ, तस्य लोपे च विहिते 'र्वोरुपधाया दीर्घ इकः ।' इत्युपधाया दीर्घत्वे रस्य विसर्गत्वे च पूः इति रूपम् । जुधातोः क्विपि । क्विपो लोपे, उकारस्य दीर्घत्वं साधयितुमाह **दृशिग्रहणस्येति** । 'अन्येभ्योऽपि दृश्यते ।' (३-२-१७८) इत्युत्तरसूत्रे 'दृश्यते' इति पद क्विप्-प्रत्यये दीर्घसंप्रसारणह्रस्वत्वादिविध्यन्तरोपसग्रहार्थमिति व्याख्यायते । तस्य अस्मिन् सूत्रेऽपकर्षणात् अस्मिन् सूत्रे निर्दिष्टस्य जुधातोर्दीर्घत्व भवति इत्यर्थः । तेन जूः इति रूपम् । ग्रावन्शब्दस्य स्तुधातुना समासः सूत्रे निपात्यते । ततः क्विपि ह्रस्वस्य पिति-इत्यादिना तुकि 'हल्ङ्याब्भ्यो – इति सोर्लोपे ग्रावस्तुत् इति रूपम् । **क्विब्वचिप्रच्छ्यायतेति** । वार्त्तिकमिदम् । वक्ति इति वाक्-दीर्घत्वं संप्रसारणाभावश्च निपात्येते । पृच्छतीति प्राट्-पूर्ववत् दीर्घत्वं संप्रसारणाभावः । आयतं स्तौति इति आयतस्तूः, दीर्घः । कटं प्रवते इति कटप्रूः, दीर्घः । श्रयति हरि इति श्रीः, दीर्घः । ननु 'क्विब्वचि-प्रच्छिश्रिस्रुद्रुप्रुज्वा दीर्घोऽसप्रसारण च' इति उणादिसूत्रे केषाञ्चित् धातूना ग्रहणात् पुनरस्मिन् वार्त्तिके किमर्थ तेषा ग्रहणम् । उच्यते-ताच्छीलिके क्विब्वचिप्रच्छि-इति वार्त्तिके तद्धातूना ग्रहणा भावे तेभ्यःतृन् एव स्यात्, न तु क्विप् । ततश्च वाक् प्राट् इत्यादिरूपाणि ताच्छीलिकेष्वर्थेषु न प्रयुज्येरन् । यतः 'वाऽसरूपविधिः ताच्छीलिकेषु न प्रवर्तते' ॥ **दाम्नीशसयुयुजेति** दाबादिभ्यस्त्रयोदशभ्यो धातुभ्यः ष्ट्रन् स्यात् । करणार्थे ष्ट्रन्प्रत्यये षकार इत् 'षिद्गौरादिभ्यश्च ।' इति ङीषर्थः । नकारः स्वरार्थः । अवशिष्टे 'त्र' प्रत्यये षकारयोगात् ष्टुत्वम् । 'दाप् लवने इति धातोः दात्यनेनेति अर्थे दात्रम् । 'णीञ् प्रापणे'-नेत्रम् । सार्वधातुकार्धधातुकयोरिति गुणः । 'शसु हिंसायाम्'

**तितुत्रतथसिसुसरकसेषु च** । ७ । २ । ९ । एषा दशाना कृत्प्रत्ययानामिण्न । शस्त्रम् योत्रम् योक्त्रम् स्तोत्रम् तोत्रम् सेत्रम् सेक्त्रम् मेढ्रम् पत्त्रम् दंष्ट्रा नद्ध्री ॥ **अर्तिलूधूसूखनसहचर इत्रः**

---

इति धातोः ष्ट्रनि 'आर्धधातुकस्येड्वलादेः' इति वलादित्वात् इटि प्राप्ते आह—**तितुत्रतथेति** । नेट् कृति इति वर्तते । ति, तु, त्र, थ, सि, सु, सर, क, स एतेषा दशाना कृत्प्रत्ययाना योगे इट् न । शस्त्रम् । यु मिश्रणे – योत्रम् । युजिर् योगे – योक्त्रम्, आबन्धो योत्रं योक्त्रमित्यमरः, 'जुपणी' इति भाषायाम् । 'ष्टुञ् स्तुतौ' स्तोत्रम् । 'तुद व्यथने –' तोत्रम्, लघूपधगुणः । 'षिञ् बन्धने –' सेत्रम् । 'सिचिर् क्षरणे –' सेक्त्रम् । 'मिह सेचने' – मेढ्रम् । 'पत्लृ गतौ' – पत्त्रम्, इडभावः । सूत्रे दश इति 'दंश दशने' इत्यस्य शपा निर्देशः । 'दंशसञ्जस्वञ्जा शपि ।' इति नलोपः । दशधातोः ष्ट्रनि, 'व्रस्जभ्रस्ज –' इति सूत्रेण शस्य षत्वे, ततः तस्य टत्वे, ष्ट्रनि षित्त्वात् ङीषि प्राप्तेऽपि 'आनित्यः षिता ङीष्' इति तस्यानित्यवात् 'अजाद्यतष्टाप् ।' इति टापि दंष्ट्रा इति रूपम् । 'णह बन्धने' इति धातोः ष्ट्रनि 'नहो धः ।' इति हस्य धत्वे 'झषस्तथोर्धोऽधः ।' इति तकारस्य धकारे नद्ध्र इति जाते प्रत्ययस्य षित्त्वात् ङीषि नद्ध्री, नह्यतेऽनयेति चर्मरज्जुः । तितुत्र – इति सूत्रस्योदाहरणानि । तन् – तन्तिः । सच् – सक्तुः । शस् – शस्त्रम् । हस् – हस्तः । कुष् – कुष्ठम्, औणादिकः क्थप्रत्ययः । कुष् – कुक्षिः, औणादिकः क्सिः । इष् – इक्षुः, औणादिकः क्सुः । अश् – अक्षरम्, सरन् प्रत्ययः । शल् – शल्कः । वद् – वत्सः ॥ **अर्तिलूधू – इति** । करणे इति वर्तते । 'ऋ गतौ' – अरित्रम् 'अरित्र केनिपातक.' इत्यमरः सुकाणूं इति भाषायाम् । 'लूञ् छेदने' लवित्रम् दात्रम् । 'धू विधूनने' इति कुटादिरेवात्र गृह्यते निरनुबन्धकत्वात् । तन 'गाङ्कुटादिभ्योऽञ्णिन् ङित् ।' (गाङादेशात् कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ।) इति ष्ट्रनः ङित्त्वे, गुणाभावात् उकारस्य उवङादेशे, धुवित्रम् ।

। ३ । २ । १८४ । अरित्रम् लवित्रम् धुवित्रम् सवित्रम् खनित्रम् सहित्रम् चरित्रम् ॥ **पुवः संज्ञायाम्** । ३ । २ । १८५ । पवित्रम् ॥ ॥ ॥

**अथोणादयः** ॥ कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ करोतीति कारुः । वातीति वायुः । पायुर्गुदम् । जायुरौषधम् । मायुः पित्तम् ।

---

अमरकोषे तु 'धवित्रं व्यजन तद्यद्रचितं मृगचर्मणा' इति 'धूञ् कम्पने' इति क्र्यादिगणीयो ऽपि गृहीतः । 'षूञ् प्रेरणे' – सवित्रम् । 'खनु अवदारणे'—खनित्रम् । 'षह मर्षणे'—सहित्रं धैर्यम् । 'चर गति–भक्षणयोः' – चरित्रम् ॥ पुवः सज्ञायाम् । पुवः इति पूङ्पूञोः सामान्येन ग्रहणम् । पूयते ऽनेनाज्यादिकमिति पवित्रं दर्भाः । पूयते आचमनोदकादि अनेन इति पवित्र अनामिकावेष्टनम् । पावमान्यादिसूक्तमित्यप्युक्तं लघुशब्देन्दुशेखरे । **उणादय इति** । कृवाजिमिस्वदि – इति सूत्रे उण् प्रत्ययो विधीयते । एतदादीनि च सूत्राणि उणादिसूत्राणि उच्यन्ते । तानि शाकटायनमुनिना प्रणीतानि न पाणिनिना । 'नामान्याख्यातजानि इति शाकटायनो नैरुक्तसमयश्च ।' इति पाणिनेरपि प्राचीनस्य यास्काचार्यस्य निरुक्ते शाकटायनमतमुपन्यस्तम् । 'नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम्' इति वार्त्तिके ऽपि तन्मतस्योल्लेखो विद्यते । पाणिनिमते तु एतान्यव्युत्पन्नानि इति 'प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्ध–मुणादयो ह्यव्युत्पन्नानि प्रातिपदिकानि' इति महाभाष्ये उक्तम् । तेषा उणादिप्रत्ययानां 'उणादयो बहुलम्' इति सूत्रे पाणिनिना निर्देशः कृतः । **कृवाजिमिस्वदि – इति** । 'उणादयो बहुलम्' इति सूत्रे 'वर्तमाने' इति 'संज्ञायां' इति च अनुवर्तते । तेन एते वर्तमाने सज्ञार्थे च बहुलं भवन्ति । कृधातोः उणि, णित्त्वाद् वृद्धौ, कारुः इति रूपम् । 'विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोः' इति मेदिनी । वाति इति वायुः । प्रत्ययस्य णित्त्वात् 'आतो युक्चिण्कृतोः ।' इति युक् । पिबन्त्यनेन तैलादिकं इति पायुः । जयत्यभिभवति रोगान् इति जायुः औषधम् । मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम् । स्वदते रोचते इति स्वादुः । साध्नोति परकार्य-

साध्नोति परकार्यमिति साधुः ॥ आशु शीघ्रम् ॥ **उणादयो बहुलम्** । ३ । ३ । १ । एते वर्तमाने संज्ञाया च बहुलं स्युः । केचिदविहिता अप्यूह्याः । संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

**तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** । ३ । ३ । १० । क्रियार्थाया क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः । मान्तत्वादव्ययत्वम् । कृष्णं द्रष्टु याति, कृष्णं दर्शको याति । **कालसमयवेलासु तुमुन्** । ३ । ३ । १६७ । कालार्थेषूपपदेषु तुमुन् । कालः समयो वेला वा भोक्तुम् ॥

---

मिति साधुः, अश्नुते व्याप्नोति इति आशु शीघ्रम् । **उणादयो बहुलम् इति** । अस्मिन् सूत्रे धातोः इति, प्रत्ययः इति, कृत् इति चानुवर्तते तेन शास्त्र-बहिर्भूतानामप्युणादीना प्रत्ययसंज्ञा कृत्संज्ञा कर्त्रर्थश्च सिध्यति । 'कृत्तद्धितस-मासाश्च ।' इति सूत्रेण प्रातिपदिकसंज्ञापि, ततः स्वादिविभक्तीनामुत्पत्तिः । **संज्ञायाम्**—रूढा एते उणादिप्रत्ययान्ताः अविद्यमानमपि धात्ववयवार्थमाश्रित्य व्युत्पाद्याः । **बहुलम्**—सर्वेषा प्रत्ययानां उणादिसूत्रेष्वपि अनुक्तत्वात् बहुलपदप्रयोगः । तेन तेष्वविहिता अपि केचित्प्रत्यया रूपानुरोधेन तर्क्याः । **कार्याद्विद्यात् इति** । यथा गुणवृद्धिनिषेधे प्रत्ययः कित् ङिद्वा ज्ञेयः । वृद्धौ ञित् णिद्वा ऊह्यः । अनूबन्ध इति उपसर्गे घञ्यमनुष्ये बहुलमिति उकारदीर्घः । **तुमुन्ण्वुलौ क्रियायामिति** । उपपदार्था सप्तमी । तेन क्रियार्थाया क्रिया-यामुपपदे इत्यर्थः । भविष्यति इति वर्तते । क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था । 'कृष्णं द्रष्टु याति,' 'कृष्णं दर्शको याति' इत्यत्र कृष्णकर्मकभवि-ष्यद्दर्शनार्थं यानं वर्तते तेन तादृशे याधातौ उपपदे दृशधातोः तुमुन्ण्वुलौ भवतः । तुमुन् मान्तः कृत् । तेन 'कृन्मेजन्तः ।' इति सूत्रेण तुमुन्नन्तं अव्ययम् । 'अव्यय-कृतो भावे' इति वचनात् भावे तुमुन् भवति ॥ **कालसमयवेलास्विति** । कालपर्यायाणा उपादानात् कालार्थेषु उपपदेषु इत्यर्थः । तेन अनेहा भोक्तुमित्यपि भवति । इह कथं तुमुन् न भवति—कालो भोजनस्य इति । वाऽस-रूपविधिना ल्युडपि भवति ॥ **भाव इति** । घञ् इति वर्तते । क्रियासामान्यं

**भावे** । ३ । ३ । १८ । सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् । पाकः ॥ **अकर्तरि च कारके संज्ञायाम्** । ३ । ३ । १९ । कर्तृभिन्ने कारके घञ् स्यात् ॥ **घञि च भावकरणयोः** । ६ । ४ । २७ । रञ्जेर्नलोपः स्यात् । रागः अनयोः किम् । रज्यत्यस्मिन्निति रङ्गः ॥ **निवासचितिशरीरोपसमाधानेष्वादेश्च कः** । ३ । ३ । ४१ । एषु चिनोतेर्घञ् आदेश्च ककारः । उपसमाधान राशीकरणम् । । निकायः, कायः । गोमयनिकायः ॥

---

भावशब्दार्थः । 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति भाष्यात् लिंगसख्यान्वययोग्यः सिद्धावस्थापन्नो धात्वर्थो भावशब्दार्थोऽत्र । पचति इत्यादौ तु साध्यावस्थावर्ती धात्वर्थः । पचधातोर्घञि, ञित्त्वात् 'अत उपधायाः । इति अकारवृद्धौ 'चजोः कु घिण्यतोः' । इति चस्य कत्वे पाकः इति रूपम् ॥ **अकर्तरि च कारके – इति** । घञ् इति वर्तते । सज्ञाया रूढौ । कर्तृभिन्ने कारके कर्मणि यथा – प्रास्यन्ति त प्रासः । अपादाने यथा आहरन्ति तस्माद्रसमित्याहारः यथा तक्षशिलाहारः । अकर्तरि किम् ? बिभर्त्यसौ भर्ता । अत्र न घञ् । सज्ञाव्यभिचारार्थश्चकार इति काशिकायाम् । तेन लाभः दायः इत्यादिरूपाणि ॥ **घञि च भावकरणयोरिति** । नलोपः इति रञ्जेः इति च वर्तते । रञ्जेर्घञि प्रकृतसूत्रेण नकारलोपे प्रत्ययस्य ञित्वात् उपधावृद्धौ 'चजोः कु घिण्यतोः ।' इति जस्य गत्वे रागः इति रूपम् । रञ्जन रागः, रज्यतेऽनेनेति च रागः । भावकरणयोरिति किमुक्तम् । रज्यत्यस्मिन् इति रङ्गः, अत्राधिकरणार्थत्वात् नलोपो न । इत उत्तर 'भावे' 'अकर्तरि च कारके' इति द्वयमपि 'कृत्यल्युटो बहुलम्' ( ३·३ ११३ ) इति यावदनुवर्तते ॥ **निवासचितीति** । चेः इति घञ् इति च वर्तते । निवासाद्यर्थेषु चिनोतेर्घञ्, आदेः चकारस्य च ककारः । निवासे–काशीनिकायः ( निचीयते मोक्षोऽत्र । ), चितौ–आकायमग्निं चिन्वीत ( आचीयन्तेऽस्मिन् इष्टकाः इति । ) शरीरे–कायः ( चीयतेऽस्मिन्नस्थ्यादिकमिति । ) उपसमाधाने राशीकरणे गोमयनिकायः ( चीयते इति । ) निवासादिषु किम् ? अन्यत्र 'एरच्' इति सूत्रेण अच् यथा चयः ॥ एरच्

**एरच्** । ३ । ३ । ५६ । इवर्णान्तादच् । चयः जयः । **ऋदोरप्** । ३ । ३ । ५७ । ऋवर्णान्तादुर्णान्तादप् । करः, गरः, यवः, लवः, स्तवः, पवः । ( **घञर्थे कविधानम्** । ) प्रस्थः ॥ **ड्वितः क्त्रिः** । ३ । ३ । ८८ । क्त्रेमम्नित्यम् । क्त्रिप्रत्ययान्तान्मम् निर्वृत्तेऽर्थे । पाकेन निर्वृत्तं पक्त्रिमम् । डुवप् उप्त्रिमम् ॥ **ट्वितोऽथुच्** । ३ । ३ । ८९ । टुवेपृ कम्पने । वेपथुः ॥

---

**इति** । एः इति पञ्चम्यन्त धातोरित्यधिकृतस्य विशेषणम् । भावे, अकर्तरि च कारके इत्यर्थः । चेः अचि चि अ इति स्थिते ' सार्वधातुक-' इति गुणे अयादेशे चयः । जेरचि जयः । घञोऽपवादः । **ऋदोरिति** । ॠच उः च तयोः समाहारः ॠदुः सौत्रं पुस्त्वम् । ॠदोरिति पञ्चम्यर्थे षष्ठी । तेन ऋवर्णान्ताद् उवर्णान्ताच्च धातोः भावे अकर्तरि च कारके अप् । अपः पित्त्वम् स्वरार्थम् । ननु ॠदोरित्यत्र किमर्थं तकारः । ॠकारस्य दीर्घत्वात् सवर्णग्रहणप्रसंगाभावेन, तपरः तत्कालस्येति तकारस्यानावश्यकत्वात् इति । उच्यते । नाय तकारः, किंतु दकारो मुखसुखार्थः । तात्परत्वे तु ह्रस्वस्यैव उकारस्य ग्रहण स्यात् न तु दीर्घस्येति दकार एवायम् । 'कॄ विक्षेपे'- कॄ अ इति स्थिते ' सार्वधातुक-' इति ॠकारस्य गुणे कर इति रूपम् । गॄ निगरणे गरः । यु मिश्रणेऽमिश्रणे च-यव. । लूञ् छेदने – लवः । पूञ् पवने-पवः । **घञर्थे-इति** । घञ् भावे अकर्तरि च कारके भवति । तस्मिन्नेवार्थे ' कः ' भवति । प्रतिष्ठन्ते ऽस्मिन् धान्यानीति प्रस्थः । प्रपूर्वात् स्था-धातोः कप्रत्यये, कित्त्वात् ' आतो लोप इटि च ' इति आलोपः । **ड्वितः क्त्रिः** । धातोः इति वर्तते । डुः इत् यस्य तस्मात् धातोः क्त्रिः प्रत्ययो भवति । **क्त्रेर्मम्नित्यमिति** । क्त्रिप्रत्ययान्तात् मप् निर्वृत्ते ऽर्थे । क्त्रिप्रत्ययः मब्विना केवलो न क्वापि प्रयुज्यते । ' भावे इति ' अकर्तरि च कारके ' इति च वर्तते । परं, अय भावे एव स्वभावात् । ' डुपचष् पाके ' –पाकेन निर्वृत्त पक्त्रिमम् । ' डुवप् बीजसंताने ' । क्त्रेः कित्त्वात् ' वचि-स्वपि– ' इति संप्रसारणे उप्त्रिमम् ॥ **ट्वितो ऽथुजिति** । टु इत्

**यजयाचयतविच्छप्रच्छरक्षो नङ्** । ३ । ३ । ९० । यज्ञः, याच्ञा, यत्नः विश्नः, प्रश्नः, रक्ष्णः ॥ **स्वपो नन्** । ३ । ३ । ९१ । स्वप्नः ॥ **उपसर्गे घोः किः** । ३ । ३ । ९२ । प्रधिः, उपधिः ॥

**स्त्रियां क्तिन्** । ३ । ३ । ९४ । स्त्रीलिङ्गे भावे क्तिन् स्यात् । घञोऽपवादः ।

---

यस्य तस्मात् ट्वितः । 'टुवेपृ कम्पने'—वेपथुः । 'टुओश्वि गति-वृद्ध्योः'—श्वयथुः ॥ **यजयाचयतविच्छप्रच्छेति** । एतेभ्यो धातुभ्यो नङ्प्रत्ययः स्यात्, भावे अकर्तरि च कारके । 'यज देवपूजासगति-करणदानेषु—' इति धातोः नङि, यज् न इति स्थिते 'स्तोः श्चुना—' इति नस्य ञत्वे जञोर्योगेन ज्ञे कृते यज्ञः इति रूपम् । 'टुयाचृ याच्ञायाम्'—याच्ञा । 'यती प्रयत्ने'—यत्नः । 'विच्छ भाषाया दीप्तौ च' इति धातोः नङि, 'च्छ्वोः शूडनुनासिके च' इति सतुकस्य छस्य शत्वे विश्नः । प्रच्छ ज्ञीप्सायाम्' इति धातोः नङि, ङित्त्वात् 'ग्रहिज्या—' इति सप्रसारणे प्राप्ते 'प्रश्ने चासन्नकाले' इति सूत्रे आचार्येण प्रश्नशब्दप्रयोगेण 'नङि प्रच्छधातोः संप्रसारणं न भवति' इति ज्ञापितत्वात् संप्रसारणाभावे, 'च्छ्वोः शूडनुनासिके च' इति सतुकस्य छस्य शत्वे प्रश्नः इति रूपम् । 'रक्ष पालने—' रक्ष्णः ॥ **स्वपो-इति** । 'ञिष्वप् शये' इति धातोः नन् प्रत्ययो भवति । नित्त्वं स्वरार्थम् । **उपसर्गे घोः—इति** । 'दाधा घ्वदाप्' इति दाधाधात्वोः घुसज्ञा । उपसर्गे उपपदे घुसज्ञकधातुभ्यः किः प्रत्ययो भवति भावे अकर्तरि च कारके । प्रपूर्वात् 'डुधाञ् धारणपोषणयोः' इति धाधातोः किप्रत्यये कित्त्वात् 'आतो लोप इटि च' इति आलोपे प्रधिः चक्रनेमिः । उपधिः कपटम् 'कपटोऽस्त्री व्याजदम्भोपधयः' इत्यमरः ॥ **स्त्रियां क्तिन् इति** । कृत्यल्युटो बहुलमित्यतः प्राक् स्त्रियामित्याधिक्रियते । तेन स्त्रीत्वविशिष्टे भावे अकर्तरि च कारके धातोः क्तिन्नादयो भवन्ति । घञ् सामान्येन विहितः । तस्यायं स्त्रीत्वविवक्षायामपवादः । अपवादविषयपरिहारेणोत्सर्गस्य

( **ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः ।** ) तेन नत्वम् । कीर्णिः, लूनिः, धूनिः ।
(**सम्पदादिभ्यः क्विप् ।**) सम्पत्, विपत्, आपत् । (**क्तिन्नपीष्यते ।** ) सम्पत्तिः ।
विपत्तिः, आपत्तिः ॥ **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** । ३ । ३ । ९७ ।

---

व्यवस्थितेः, स्त्रिया घञ् न भवति । स्त्र्यधिकारे वाऽसरूपविधिर्नास्तीति प्रागुक्तम् । अयं क्तिन्प्रत्ययः परत्वात् अजपौ नित्यं बाधते । तौ पुंस्त्व-विशिष्टभावादौ भवतः । नकारः स्वरार्थः । 'डुकृञ् करणे' इति धातोः क्तिनि कित्त्वात् गुणाभावे कृतिः । एवं स्तुतिः ॥ **ॠल्वादिभ्य इति ।** ॠकारान्तेभ्यो ल्वादिभ्यश्च धातुभ्यः परः क्तिन् निष्ठावद् वाच्यः । अतिदेशवार्त्तिकमिदम् । ॠल्वादीना धातूनां निष्ठाया यानि कार्याणि विहितानि तानि क्तिनि परतोऽपि भवन्ति । यथा 'कॄ विक्षेपे' इति कॄ धातोः क्तिनि, 'ॠत इद् धातोः' इति किर् ति इति जाते, 'हलि च' इति सूत्रेण कीर् + ति इति भूते, प्रकृतवार्त्तिकेन क्तिनो निष्ठावत्त्वे, 'रदाभ्या निष्ठातो नः –' इति सूत्रेण तस्य नत्वे, कीर् नि इति जाते, नस्य णत्वे, कीर्णिः इति रूपम् । 'लूञ् छेदने' इति धातोः क्तिनि, तस्य निष्ठावत्त्वे, 'ल्वादिभ्यः' इति तकारस्य नकारे लूनिः रूपम् । एवं धूञ् कम्पने – धूनिः । पूनिः इति रूपं तु चिन्त्यम् । पूञः ल्वादिगणे पाठाभावात् ॥ **संपदादिभ्य इति** । संपदादिभ्यः भावे अकर्तरि च कारके क्विप् भवति । क्विपः 'वेरपृक्तस्य' इति लुप्तत्वात् सम्पद्, विपद् इत्यादि-रूपाणि । स्त्र्यधिकारे वाऽसरूपविधिनषेधात् क्वपा क्तिनो नित्यं बाधः । स्यात्, ततः सम्पत्तिः इत्यादिरूपाणि कथमित्यत आह '**क्तिन्नपी-ष्यते**' इति । इष्टिरियं भाष्यकारस्य । सपदादिभ्यः धातुभ्यः भावे अकर्तरि च कारके क्तिन्नपि भवतीत्यर्थः । तेन संपत्तिः, विपत्तिः ॥ **ऊतियूतिजूति–इति** । एते शब्दाः स्त्रिया क्तिन्नन्ता निपात्यन्ते । ननु किमर्थं 'ऊति' शब्दोऽत्र निपात्यते । यतः अवधातोः क्तिनि 'ज्वरत्वरस्रिव्यवि' – इति अकारवकारयोः ऊठि आदेशे सति ऊतिः इति रूपं लभ्यते । उच्यते । पूर्वसूत्रात् उदात्तः इत्यस्यानुवृत्त्या

एते निपात्यन्ते ॥ **ज्वरत्वरस्रिव्यविमवामुपधायाश्च** । ६ । ४ । २० । एषामुपधावकारयोरूठ् अनुनासिके क्वौ झलादौ क्ङिति । अतः क्विप्। जूः, तूः, स्रूः, ऊः, मूः ॥ **इच्छा** । ३ । ३ । १०१ । इषेर्निपातोऽयम् ॥ **अ प्रत्ययात्** । ३ । ३ । १०२ । प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारः प्रत्ययः

---

ऊत्यादिषु क्तिन् उदात्तः इत्यर्थो भवति । एतत्स्वरार्थं अत्र ऊतिशब्द-ग्रहणम् । अन्यथा 'ञ्नित्यादिर्नित्यम्' इति सूत्रेण प्रकृतेरादिः उदात्तः स्यात् । युधातोः यूतिः, जुधातोश्च जूतिः । अनयोः दीर्घत्व निपात्यते । 'षोऽन्तकर्मणि' इति धातोः सातिः । द्यतिस्यति – इति इत्वे प्राप्ते इह इत्वाभावो निपात्यते । 'षणु दाने' इति धातोर्वा इद रूपम् । 'जनसनखना सञ्झलोः' इति आत्वे कृते स्वरार्थमिह ग्रहणम् । हन्तेर्हिनोतेर्वा हेतिः । 'कृत सशब्दने' इति धातोर्णिजन्तत्वात् 'ण्यासश्रन्थो युच्' इति युच बाधित्वा क्तिन् निपात्यते, कीर्तिः ॥ **ज्वरत्वरस्रिवि – इति** । 'च्छ्वोः शूडनु –' इति सूत्रात् वकारः ऊठ् चानुवर्तते । क्विझलोः क्ङिति इत्यप्यनुवर्तते । एतेषा धातूना उपधावकारयोः स्थाने ऊठ् आदेशः स्यात् क्वौ झलादौ क्ङिति च प्रत्यये । ज्वरधातोः क्विपि प्रकृतसूत्रेण वकाराकारयोः ऊठादेशे जूर् इति जाते सौ 'हल्ङ्याब्भ्यो' इति सुलोपे रकारस्य विसर्गे जूः इति रूपम् । त्वरधातोः तूः । स्रिविधातोः स्रूः । अव-धातोः ऊः ॥ **इच्छा – इति** । इषु इच्छायामिति धातोर्निपातः । भावे इत्येव । अत्र इषेर्भावे शः यगभावश्च निपात्यते । अन्यथा शे कृते शस्य सार्वधातुकत्वात् भावे 'सार्वधातुके यक्' इति यक् स्यात् ॥ **अ प्रत्ययात् इति** । अ इति लुप्तप्रथमाकं पदम् । प्रत्ययात् इति धातोरित्यधिकृतस्य विशेषणम् । तदन्तविधिना प्रत्ययान्ताद्धातोः इत्यर्थः । स्त्रियामिति वर्तते तेन स्त्रीत्वविशिष्टे भावे अकर्तरि च कारके इत्यर्थः । चिकीर्ष इति सन्प्रत्ययान्तात्कृधातोः प्रकृतसूत्रेण अप्रत्यये, तस्यार्धधातुकत्वात् 'अतो लोपः' इति सूत्रेण चिकीर्ष इत्यस्य अकारलोपे, कृदन्तत्वात्प्रातिपदिकत्वे स्त्रीत्वविवक्षाया टापि चिकीर्षा इति रूपम् । एवमेव पुत्रकाम्य इति

स्यात् । चिकीर्षा, पुत्रकाम्या ॥ **गुरोश्च हलः** । ३ । ३ । १०३ । गुरुमतो हलन्तात्स्त्रियामप्रत्ययः स्यात् ईहा ॥ **ण्यासश्रन्थो युच्** । ३ । ३ । १०७ । अकारस्यापवादः । कारणा हारणा ॥

**नपुंसके भावे क्तः** । ३ । ३ । ११४ । **ल्युट् च** । ३ । ३ । ११५ । हसितम्, हसनम् ॥

**पुंसि संज्ञायां घः प्रायेण** । ३ । ३ । ११८ । **छादेर्घेऽद्व्युपसर्गस्य** ।

---

काम्यच्प्रत्ययान्तात् अप्रत्यये, अकारलोपे, टापि पुत्रकाम्या । **गुरोश्च हल इति** । हलः इति पञ्चमी धातोः इत्यस्य विशेषणम्, तेन हलन्तात् इत्यर्थः । तस्य गुरुत्वासम्भवेन गुरुमतः इत्यर्थः पर्यवस्यति । दीर्घस्य संयोगापूर्वस्य ह्रस्वस्य चाचो गुरुसंज्ञा । ईहधातोः ईहा । ऊहधातोः ऊहा । गुरोः किम्, भजधातोः भक्तिः । हलः किम्, नीतिः ॥ **ण्यासश्रन्थो युजिति** । ण्यन्तेभ्यः आस, श्रन्थ इत्येताभ्यां च स्त्रियां भावे अकर्तरि च कारके युच्प्रत्ययो भवति । 'अ प्रत्ययात्' 'गुरोश्च हलः' इति सूत्रद्वये विहितस्य अप्रत्ययस्यायमपवादः । णिजन्तात् कृधातोः युचि, युवोरनाकौ इति अनादेशे, कारि अन इति स्थिते 'णेरनिटि' इति इकारलोपे, कार् अन इति जाते, 'रषाभ्यां नो णः –' इति नस्य णत्वे, टापि कारणा । एवं णिजन्तात् हृधातोः हारणा । आस उपवेशने – आसना । श्रन्थ विमोचनप्रतिहर्षयोः–श्रन्थना ॥ **नपुंसके भाव इति** । क्लीबत्वविशिष्टे भावे कालसामान्ये क्तः स्यात् । अयं अकर्मकेभ्य एव । हसधातोः क्ते, 'आर्धधातुकस्येड् वलादेः' इति इटि हसितं रूपम् । एवं शयितम्, जल्पितम् ॥ **ल्युट् चेति** । अयमपि क्लीबत्वविशिष्टे भावे । हसनं जल्पनं इत्यादि ॥ **पुंसि संज्ञायां घ इति** । करणाधिकरणयोरिति वर्तते । अर्थनिर्देशे सप्तमी । पुल्लिङ्गयोः करणाधिकरणयोः अभिधेययोः धातोर्घः प्रत्ययो भवति, समुदायेन चेत्संज्ञा गम्यते । प्रायग्रहणं 'न सर्वेषु स्थलेषु घो भवति' इति द्योतनार्थम् । पुंसि इति किम्, प्रसाधनम् । घकारः 'छादेर्घे –' इति विशेषणार्थः ॥ **छादेर्घ इति** । उपधायाः इति ह्रस्वः इति च वर्तते । अद्व्युपसर्गस्य – द्वौ उपसर्गौ यस्य स द्व्युपसर्गः, स न भवतीति अद्व्युपसर्गः,

कृच्छ्रे दुष्करः कटो भवता। अकृच्छ्रे ईषत्कारः, सुकरः। **आतो युच्** । ३ । ३ । १२८ । खलोपवादः। ईषत्पानः सोमो भवता । दुष्पानः, सुपानः ॥

**अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा** । ३ । ४ । १८। प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यात् । प्राचा ग्रहण पूजार्थम् । अमैवाव्ययेनेति नियमान्नोपपदसमासः। दो दद्घोः। अल दत्त्वा। घुमास्थेतीत्वम्। पीत्वा खलु । अलंखल्वोः किम् । मा कार्षीत्। प्रतिषेधयोः

---

सूत्रेण प्रातो मुम् न भवति। खित्यनव्ययस्य ॥ **आतो युजिति** । ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु इत्यनुवर्तते। तेन ईषदादिषु कृच्छ्राकृच्छ्रार्थेषु उपपदेषु आदन्ताद् धातोर्युच् स्यादित्यर्थः । अयमपि खलर्थत्वात् भावे कर्मणि च भवति । 'युवोरनाकौ' इति योरनादेशः। चकारः स्वरार्थः॥ **अलंखल्वोरिति**। प्रतिषेधयोः इति पद अलखल्वोरित्यस्य विशेषणम्। तेन आह प्रतिषेधार्थयोः इति अलखल्वोः इति उपपदार्थे सप्तमी। अव्ययकृतो भावे भवन्ति इति वचनात् क्त्वा भावार्थकः। सूत्रे प्राचा ग्रहणं विकल्पार्थमिति काशिकायाम्। पूजार्थमिति सिद्धान्तकौमुद्याम्, विकल्पस्तु वासरूपविधिना लभ्यते। केचित्तु वाऽसरूपविधिः स्त्रिया क्तिन् इत्यतः प्रागेव प्रवर्तते, अल रोदनेन इत्यादिप्रयोगास्तु बहुलग्रहणात्समाधेया इत्याहुः। अलं दत्त्वा इत्यत्र उपपदसमासे क्त्वो ल्यप् आदेशः स्यादित्याशक्य आह **अमैवाव्ययेनेति**। अमा एव तुल्यविधान यदुपपद तदेवाव्ययेन समस्यते। यस्मिन् सूत्रे अम् (णमुल्) एव विधीयते तस्मिन् यत्पदस्य उपपदसंज्ञा भवति तेनैव सह अव्ययस्य समासः। यथा स्वादुंकारम् अत्र 'स्वादुमि णमुल्' इति सूत्रेण णमुल । एतेन अन्यत्र अव्ययेन सह समासो निषिद्धः । अलंपूर्वकात् दाधातोः क्त्वाप्रत्यये, 'दो दद्घोः' इत्यनेन ददादेशे, 'खरि च' इति थस्य तत्वे, कृदन्तत्वात् सौ कृते, 'क्त्वातोसुन्कसुनः।' इति अव्ययसंज्ञाया, 'अव्ययादाप्सुपः।' इति सोर्लोपे दत्त्वा इति रूपम्। खलूपपदात् पाधातोः क्त्वा प्रत्यये 'घुमास्थागापाजहातिसां हलि।' इति आकारस्य ईत्वे पूर्ववत् 'पीत्वा' रूपम्। पीत्वा खलु, पानेन साध्यं नास्तीत्यर्थः। अलं दत्त्वा, अपात्रे न देयम्। अलंखल्वोः किम्। प्रतिषेधार्थे अन्यस्मिन्नुपपदे क्त्वा न भवति-मा कार्षीत्, माङि लुङ्। 'न माङ्

किम् । अलंकारः ॥ **समानकर्तृकयोः पूर्वकाले** । ३ । ४ । २१ ॥ समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । भुक्त्वा व्रजति । द्वित्वमतन्त्रम् । भुक्त्वा पीत्वा व्रजति । **न क्त्वा सेट्** । १ । २ । १८ । सेट् क्त्वा किन्न स्यात् । शयित्वा । सेट् किम् । कृत्वा ॥ **रलो व्युपधाद्धलादेः संश्च** । १ । २ । २६ । इवर्णोवर्णोपधाद्धलादे रलन्तात्परौ क्त्वासनौ सेटौ वा कितौ स्तः । द्युतित्वा, द्योतित्वा ।

---

योगे ।' इत्यडागमप्रतिषेधः । प्रतिषेधयोः किम् । अप्रतिषेधार्थे अलमुपपदे क्त्वा न भवति । अलंकारः ॥ **समानकर्तृकयोरिति** । समानः एकः कर्ता ययोः तयोः धात्वर्थयोः । निर्धारणे षष्ठी । पूर्वकाले इति धातोरित्यस्य विशेषणम् । तेन पूर्वकाले विद्यमानाद् धातोरित्यर्थः । भुक्त्वा वजति इत्यत्र भोजनादूर्ध्वं गमनम् इत्यर्थः । तेन पूर्वकालिकात् भोजनार्थकभुजधातोः क्त्वा । 'चोः कुः ।' इति जकारस्य गकारः तस्य च 'खरि च' इति ककारः ।' **द्वित्वमतन्त्रमिति** सूत्रे समानकर्तृकयोः इति द्विवचन न विवक्षितम् । तेन भुक्त्वा पीत्वा व्रजति इत्यत्र त्रिषु धातुषु व्रजनापेक्षया भोजनपानयोः पूर्वकालिकत्वात् क्त्वा । समानकर्तृकयोरिति किम् । भुक्तवति देवदत्ते गच्छति यज्ञदत्त ॥ **न क्त्वा सेडिति** । कित् इति वर्तते । इटा सहितः । सेट् 'शीङ् स्वप्ने' इति धातोः क्त्वाप्रत्यये 'आर्धधातुकास्येड् वलादेः ।' इति इटि प्रकृतसूत्रेण क्त्वाप्रत्ययस्य कित्त्वाभावे 'सार्वधातुकार्धधातुकयोः ।' इति गुणे, शे इत्वा इति जाते 'एचोऽयवायावः ।' इति अयादेशे शयित्वा इति रूपम् । सेट् किम् । कृत्वा – अत्र कृधातोः क्त्वाप्रत्यये 'एकाच उपदेशेऽनुदात्तात्' इति इण्निषेधे कित्त्वात् 'क्ङिति च' इति गुणाभावे कृत्वा इति रूपम् । **रलो व्युपधादिति** । पूर्वसूत्रेभ्यः क्त्वा सेट् कित् वा इति चत्वारि पदान्यनुवर्तन्ते । रल् प्रत्याहारः । रलः रलन्तात् धातोः इत्यर्थः । उश्च इश्च वी । ते उपधे यस्य तस्मात् । हल् आदिर्यस्य तस्मात् हलादेः । 'द्युत दीप्तौ' इति धातोः क्त्वा प्रत्यये, 'आर्धधातुकस्येड् –' इति सूत्रेण इटि प्रकृतसूत्रेण क्त्वाप्रत्ययस्य

हलादेः लिखित्वा, लेखित्वा । व्युपधात्किम् । वर्तित्वा । रलः किम् । सेवित्वा । हलादेः । किम् एषित्वा । सेट् किम् । भुक्त्वा ॥ **उदितो वा** । ७ । २ । ५६ । उदितः परस्य क्त्व इड्वा । शमित्वा शान्त्वा । देवित्वा द्यूत्वा । दधातेर्हिः ।

---

कित्त्वनिषेधे, 'पुगन्तलघूपधस्य च ।' इति उपधागुणे द्योतित्वा इति रूपम् । कित्त्वे तु द्युतित्वा । 'लिख अक्षरविन्यासे' इतीकारोपधात् धातोः लिखित्वा, लेखित्वा । सन्– दिद्युतिषते दिद्योतिषते । लिलिखिषति लिलेखिषति । व्युपधात् किम्, वर्तित्वा । अत्र क्त्वाप्रत्यये 'आर्धधातुकस्य –' इति इडागमे ऋकारोपधत्वात् 'न क्त्वा सेट् ।' इति नित्यं कित्त्वनिषेधे उपधागुणे वर्तित्वा रूपम् । रलः किम् देवित्वा – अत्र रलन्तत्वाभावात् सेटः क्त्वाप्रत्ययस्य नित्य कित्त्वाभावे देवित्वा रूपम् । 'सेवित्वा' इति पाठे 'षिवु तन्तुसन्ताने' इति धातो रूपम् । हलादेः किम् एषित्वा – अत्र हलादित्वाभावात् न कित्त्वविकल्पः । सेट् किम् । भुजधातोः क्त्वाप्रत्यये एकाच उपदेशेऽनु-दात्तात्' इति इटोऽभावे नित्यं कित्त्वम् ॥ **उदितो वेति** । क्त्वः इति वर्तते । उदितः इति अधिकृतस्य धातोर्विशेषणम् । उत् इत् यस्य स उदित् । उदितः धातोः परस्य क्त्वाप्रत्ययस्य इड् वा । 'शमु उपशमे' इति धातोः क्त्वाप्रत्यये प्रकृतसूत्रेण इड्विकल्पे इट्पक्षे शमित्वा । इडभावे 'अनुनासिकस्य क्विझलोः क्ङिति' इति उप-धादीर्घे 'नश्चापदान्तस्य झलि ।' इति मस्यानुस्वारे 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णे शान्त्वा इति रूपम् । 'दिवु क्रीडाविजिगीषादिषु' इति धातोः क्त्वाप्रत्यये, प्रकृतसूत्रेण इड्विकल्पे, इट्पक्षे 'न क्त्वा सेट्' इति कित्त्वाभावे, उपधागुणे देवित्वा, । इडभावपक्षे तु दिव् क्त्वा इति स्थिते 'च्छ्वोः शूडनुनासिके च' इत्यूठि 'इको यणचि' इति यणि च कृते द्यूत्वा रूपम् ॥ **दधातेर्हिः – इति** । ति किति इति वर्तते । तादौ किति इत्यर्थः । 'डुधाञ् धारणपोषणयोः' इति धातोः क्त्वाप्रत्यये प्रकृतसूत्रेण हित्वे 'अनेकाल्शित्सर्वस्य' इति सर्वादेशे कृते

हित्वा ॥ **जहातेश्च क्त्वि** । ७ । ४ । ४३ । हित्वा । हाङस्तु हात्वा ॥ **समासेऽनञ्पूर्वे क्त्वो ल्यप्** । ७ । १ । ३७ । अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात् । तुक् । प्रकृत्य । अनञ् किम् । अकृत्वा ॥

**आभीक्ष्ण्ये णमुल् च** । ३ । ४ । २२ । आभीक्ष्ण्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च ॥ **नित्यवीप्सयोः** । ८ । १ । ४ । आभीक्ष्ण्ये वीप्सायां च द्योत्ये पदस्य द्वित्वं स्यात् । आभीक्ष्ण्यं तिङन्तेष्वव्ययसञ्ज्ञकेषु

---

कित्त्वाद्गुणनिषेधे हित्वा रूपम् ॥ **जहातश्चेति** । हिः इति वर्तते । 'ओहाक् त्यागे' इति धातोः क्त्वाप्रत्यये हिः आदेशो भवति । हित्वा । जहातेः इति श्तिपा निर्देशः 'ओहाङ् गतौ' इत्यस्य वारणार्थः । तस्मात् हात्वा इति रूपम् ॥ **समासेऽनञ्पूर्व इति** । नञ् पूर्वः पूर्वपदं यस्य स नञ्पूर्वः । स न भवति इत्यनञ्पूर्वः समासः' पर्युदासात् नञ्भिन्ने नञ्सदृशे च अव्यये पूर्वपदे क्त्वो ल्यबादेशः स्यात् । प्रपूर्वककृधातोः 'कुगतिप्रादयः' इति नित्ये समासे क्त्वाप्रत्ययस्य कित्त्वात् 'ह्रस्वस्य पिति –' इति तुकि प्रकृतसूत्रेण क्त्वो ल्यबादेशे प्रकृत्य इति रूपम् । अनञ् इति किम् । अकृत्वा । 'अनीत्वा पंकतां धूलिमुदकं नावतिष्ठते' इति माघे ॥ **आभीक्ष्ण्ये णमुल् चेति** । समानकर्तृकयोः पूर्वकाले इति पूर्वसूत्रादनुवर्तते । चकारेण क्त्वाऽनुकृष्यते । अभीक्ष्णस्य भावः आभीक्ष्ण्यम् पौनःपुन्यम् । पौनःपुन्ये द्योत्ये समानकर्तृकयोः धात्वोः पूर्वकालिकाद् धातोः णमुल् क्त्वा च भवतः इत्यर्थः । **नित्यवीप्सयोरिति** । सर्वस्य द्वे इत्यनुवर्तते । नित्यं नित्यत्वं आभीक्ष्ण्यमित्यर्थः । व्याप्तुमिच्छा वीप्सा । व्याप्तिः इह कार्त्स्न्यम् । द्योत्ये इति वृत्तौ विशेषणस्य नपुंसकनिर्देश एकवचनं च 'नपुंसकमनपुंसकेनैकवच्च ।' इति सूत्रेणैकशेषात् । सर्वस्य द्वे इत्यनुवृत्तम्, तेन एकस्य पदस्य स्थाने द्वे पदे समुदिते आदेशत्वेन विधीयेते इत्यर्थः । आभीक्ष्ण्यं तिङन्तेषु – इति । तद्धि क्रियानिष्ठधर्मः । तेन तद्द्योतनार्थं द्वित्वं क्रियाप्रधानानामेव न्याय्यम् । क्रियाप्राधान्यं

कृदन्तेषु । स्मार स्मार नमति शिवम् । स्मृत्वा स्मृत्वा । पायं पायम् भोज भोजम् । श्रावं श्रावम् ॥ **अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्** । ३ । ४ । २७ । एषु कृञो णमुल् स्यात्सिद्धोऽप्रयोगोऽस्य एवभूतश्चेत् कृञ् । व्यर्थत्वात्प्रयागानर्ह इत्यर्थः । अन्यथाकारम्, एवङ्कारम्, कथङ्कारम्, इत्थंकारं भुङ्क्ते । सिद्धेति किम् । शिरोऽन्यथा कृत्वा भुङ्क्ते । **इति कृदन्तप्रक्रिया ॥**

## अथ विभक्त्यर्थप्रकरणम् ॥

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा** । २ । ३ । ४६ ।

---

चाख्याते ऽ स्ति कृद्विशेषेच 'अव्ययकृतो भावे ।' इति वक्ष्यमाणत्वादिति भावः इति तत्त्वबोधिन्याम् । स्मार स्मार एतत् णमुलन्तम् । स्मृ धातोः णमुलि, 'अचो ञ्णिति' इति ऋकारस्य वृद्धौ स्मारम् इति जाते, प्रकृत-सूत्रेण द्वित्त्वे, मस्य चानुस्वारे, स्मार स्मारं नमति शिवमिति सिद्धम् । पक्षे क्त्वान्तम्, स्मृत्वा स्मृत्वा । पाय पायम् – पा धातोर्णमुलि, 'आतो युक् चिण्कृतोः' इति युकि, प्रकृतसूत्रेण द्वित्त्वे, पाय पाय इति रूपसिद्धिः । एव भोजं, भोजमित्यादि ॥ **अन्यथैवंकथमित्थंस्विति** । अन्यथा एवमित्यादिषु कृञः णमुल् स्यात् । सिद्धाप्रयोगः – सिद्धः अप्रयोगः प्रयोगाभावः यस्य सः सिद्धाप्रयोगः कृञ् चेत् । कृञो ऽ र्थस्य अविवक्षि-तत्वे ऽ पि णमुल्प्रत्ययसाधुत्वार्थं तस्य प्रयोगः इति भाव. । अन्यथाकारं भुंक्ते, अन्यथा भुक्ते इत्यर्थ· । सिद्धाप्रयोग इति किम् । कृञो ऽ र्थ-विवक्षाया णमुल् न भवति यथा – शिरो ऽ न्यथा कृत्वा भुक्ते । **इति कृदन्तप्रक्रिया ।**

## अथ विभक्त्यर्थप्रकरणम् ।

**प्रातिपदिकार्थ – इति** 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इति प्रातिपदिकलक्षणम् । तस्यार्थः प्रातिपदिकार्थः । शब्दात् द्वावर्थौ ज्ञायेते

नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येक योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे । उच्चैः, नीचैः, कृष्णः, श्रीः, ज्ञानम् । लिङ्गमात्राधिक्ये तटः, तटी, तटम् । परिमाणमात्रे द्रोणो व्रीहिः । वचन सख्या । एकः, द्वौ, बहवः ॥ **संबोधने च** । २ । ३ । ४७ । प्रथमा स्यात् । हे राम

---

शक्यार्थो लक्ष्यार्थश्च तत्र कतरो ऽत्र ग्राह्य इति आशकायामाह— **नियतोपस्थितिक इति** । नियता उपस्थितिर्यस्येति बहुव्रीहिसमासः । यस्मिन् प्रातिपदिके उच्चारिते सति यस्यार्थस्य नियमेन स्मरण भवति स शक्यार्थः तत्प्रातिपदिकार्थः प्रथमाविभक्त्युत्पत्त्यनन्तरं पदान्तरसानिध्यात् शक्यार्थानुपपत्तेर्वा क्वचिल्लक्ष्यार्थो ऽपि तस्माज्ज्ञायते, पर तस्यासार्वत्रिकत्वान्न प्रातिपदिकार्थत्वम् । प्रातिपदिकार्थश्च लिगं च परिमाण च वचन चेत्येतेषा द्वन्द्वः । मात्रशब्दो ऽवधारणार्थः । 'द्वन्द्वान्ते श्रूयमाण पद प्रत्येकमभिसंबध्यते' इति न्यायेन प्रातिपदिकार्थमात्रे लिगमात्रे इति तस्य प्रत्येकमन्वयः । प्रातिपदिकार्थ विना केवलस्य लिगस्य परिमाणस्य च प्रतीतिर्न भवतीत्याह **लिंगमात्राद्याधिक्य इति** । आदिपदेन परिमाण परामृश्यते । वचन सख्या । **उच्चैः नीचैरिति** । अव्यये इमे । तयोः अलिगत्वात् प्रातिपदिकार्थे प्रथमा । कृष्णः, श्रीः, ज्ञानम् इत्येतेषा नियतलिगत्वात् अत्रापि प्रातिपदिकार्थे एव प्रथमा । एतल्लिगाना प्रातिपदिकार्थे ऽन्तर्भावात् । **तट इत्यादि** । एतेषामनियतलिगत्वात् प्रातिपदिकार्थ· लिंग च इति द्वयोरेव प्रथमा । **द्रोणो व्रीहिरिति** । द्रोणः चतुराढकमित परिमाणम् । परिमाणमात्राधिके प्रातिपदिकार्थे प्रथमा । व्रीहिः धान्यविशेषः जातावेकवचनम् । सामानाधिकरण्यात् द्रोणरूपं यत्परिमाण तत्परिच्छिन्नो व्रीहिरित्यर्थः । **एक इति** । प्रकृतिभ्य एव एकत्वाद्यर्थलाभात् प्रकृतसूत्रेण प्रथमाविभक्त्या केवलं तदनुवादः क्रियते । प्रातिपदिकार्थनैरपेक्ष्येण एकत्वाद्यर्थस्य नियमेनोपस्थितेः 'संख्यामात्राधिक्ये' इति नोक्तम् ॥ **संबोधने चेति** । प्रथमा इति वर्तते ।

**कर्तुरीप्सिततमं कर्म** । १ । ४ । ४९ । कर्तुः क्रियया आप्तुमिष्टतमं कारक कर्मसज्ञ स्यात् ॥ **कर्मणि द्वितीया** । २ । ३ । २ । अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मादौ प्रथमा । हरिः सेव्यते । लक्ष्म्या सेवितः ॥ **अकथित च** । १ । ४ । ५१ । अपादानादिविशेषैरविवक्षितं कारक कर्मसंज्ञं स्यात् । दुह्याच्पच्दण्ड्रुधिप्रच्छि-

---

सबोधनाधिके प्रातिपदिकार्थे प्रथमा इत्यर्थः । सम् सम्मुखीकृत्य बोधन ज्ञापनं संबोधनम् ॥ **कर्तुरीप्सिततममिति** । कारके इति वर्तते । तच्च प्रथमान्ततया विपरिणम्यते । करोति क्रिया निर्वर्तयति इति कारकम् । ईप्सितं आप्नोतेः सन्नन्तात् क्त. । अतिशयेन ईप्सितं ईप्सिततमम् । 'क्तस्य च वर्तमाने' इति सूत्रेण कर्तुः इति कर्तरि षष्ठी । वर्तमानार्थस्तु न विवक्षितः । तेन कटं कृतवान्, कटं करिष्यति इत्यादौ कटमित्यस्य कर्मसज्ञा सिध्यति । कथं ईप्सितमित्याकाङ्क्षाया क्रियया इति लभ्यते । कर्तुरिति किम् । माषेष्वश्वं बध्नाति । अत्र कर्मणः अश्वपदार्थस्य ईप्सिताः माषाः, न तु कर्तुरिति माषपदस्य न कर्मसंज्ञा । तमब्ग्रहणं किमर्थम् । पयसा ओदन भुङ्क्ते इत्यत्र ओदन एव प्रधानभक्ष्यम् । पयस्तु तन्मिश्रणसाधनत्वेन गौणम् । अतस्तस्य न कर्मसज्ञा ॥ **कर्मणीति** । 'अनभिहिते' इत्यधिकृत 'कर्मणि' इत्यस्य विशेषणम् । तेन आह – **अनुक्ते कर्मणि** । हरिं भजति इत्यत्र कर्तरि तिङ् । कर्म तु अनुक्तमेव । अतस्तस्य द्वितीया । हरिः सेव्यते इत्यत्र तु कर्मणि तिङ् । कर्मणस्तिङा उक्तत्वात् 'प्रातिपदिकार्थ-' इति सूत्रेण हरिशब्दस्य प्रथमा ॥ **अकथितं चेति** । कारके इत्यधिकृतं पूर्ववत्प्रथमान्ततया विपरिणम्यते । अकथितं अविवक्षितम् । कथमित्याकाङ्क्षाया आह–**अपादानादिविशेषैः** । अपादानं, सम्प्रदानं, अधिकरणं, कर्म, करण, कर्ता इति षट् कारकाणि । यदा अपादानत्वादिविशेषरूपेण कारक न विवक्ष्यते तदा तत्कर्मसंज्ञं भवतीत्यर्थः । ननु 'नटस्य गाथा शृणोति' इत्यत्रापि अपादानत्वाविवक्षाया नटशब्दस्य कर्मत्वं स्यात् । उच्यते–अकथितस्य कर्मसंज्ञा केषुचिदेव धातुषु प्रवर्तते न सर्वत्र । अतः परिगणनार्थमाह–**दुह्याचपचेति** । दुहादीना द्वादशाना नीप्रभृतीना चतुर्णा

चिब्रूशासुजिमन्थमुषाम् ॥ कर्मयुक् स्यादकथित तथा स्यान्नीहृकृष्वहाम् ॥ १ ॥ गा दोग्धि पयः । बलि याचते वसुधाम् । तण्डुलानोदन पचति । गर्गान् शत दण्डयति । व्रजमवरुणद्धि गाम् । माणवक पन्थान पृच्छति । वृक्ष-मवचिनोति फलानि । माणवक धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधा क्षीरनिधि मथ्नाति । देवदत्तं शत मुष्णाति । ग्राममजा नयति हरति कर्षति वहति वा । अर्थनिबन्धनेय संज्ञा । बलि भिक्षते वसुधाम् । माणवकं धर्मं भाषते, अभिधत्ते, वक्तीत्यादि ॥

**स्वतन्त्रः कर्ता** ।१।४।५४। क्रियाया स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥
**साधकतमं करणम्** । १ । ४ । ४२ । क्रियासिद्धौ प्रकृष्टोपकारक

---

ऽच धातूना कर्मयुक्, प्रधानकर्मणा यद् युज्यते संबद्धं भवति, तदेव अकथितं कर्म इत्यर्थः । 'गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्' इति कर्मणि प्रयोगे व्यवस्थामाश्रित्य गणद्वये धातूना विभागोऽत्र कृतः । गा दोग्धि पयः– दोग्धुरीप्सिततमत्वात् पयोऽत्र मुख्य कर्म । गौस्तु तन्निमित्तत्वेनात्रोक्ता इति तस्या अपादानत्वाविवक्षाया कर्मसंज्ञा । एवमुत्तरत्रापि द्रष्टव्यम् । **अर्थनिबन्धनेति** । अर्थः निबन्धनं कारण यस्याः सा । न केवलं कारिकाया निर्दिष्टेषु धातुषु अकथितस्य कर्मसंज्ञा, किन्तु तत्समानार्थकेष्वपि इत्यर्थः ॥ **स्वतन्त्रः कर्तेति** । कारके इति वर्तते । तत्सामर्थ्यात् क्रियाया स्वतन्त्रः इत्यर्थो लभ्यते । स्वतन्त्रः प्रधानभूतः । स्थाली पचति, काष्ठानि पचन्ति इत्यादौ सौकर्यातिशय द्योतयितुं स्थाल्यादीना वस्तुतः स्वातन्त्र्याभावेऽपि कर्तृत्वेन प्रयोगो दृश्यते तत्रातिव्याप्ति वारयितुमाह – **स्वातन्त्र्येण विवक्षितोऽर्थ इति** ॥ **साधकतमं करणमिति** । साध्यते निर्वर्त्यते ऽनेनेति साधकम् । अतिशयेन साधक साधकतमम् । यद्व्यापारानन्तर फलप्राप्तिर्भवति तत् इत्यर्थः । ननु तमब्ग्रहण व्यर्थम् । यथा लोके 'अभिरूपाय कन्या देया' इत्युक्ते अभिरूपतमायैव कन्या दीयते एव साधकं करणमित्युक्ते 'साधकतमं करणं' इत्यर्थो लभ्येत । सत्यम् । एवं तर्हि प्रकर्षार्थप्राप्तावपि यत्तमब्ग्रहणं करोति तज्ज्ञापयत्याचार्यः कारकप्रकरणे तमपा विना प्रकर्षो न विशेय इति । तेन 'गंगाया

करणसंज्ञं स्यात् ॥ **कर्तृकरणयोस्तृतीया** । २ । ३ । १८ । अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ॥

**कर्मणा यमभिप्रैति स संप्रदानम्** । १ । ४ । ३२ । दानस्य कर्मणा यमभिप्रैति स संप्रदानसंज्ञः स्यात् ॥ **चतुर्थी संप्रदाने** । २ । ३ । १३ । विप्राय गां ददाति ॥ **नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च** । २ । ३ । १६ । एभिर्योगे चतुर्थी । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं, प्रभुः, समर्थः, शक्त इत्यादि ॥

**ध्रुवमपायेऽपादानम्** । १ । ४ । २४ । अपायो विश्लेषस्तस्मिन्साध्ये यद्

---

घोषः' इत्यत्र घोषेण अखिलगङ्गाया व्याप्त्यभावेऽपि आधारोऽधिकरणमिति सूत्रेण गङ्गाया अधिकरणसंज्ञा भवति ॥ **कर्तृकरणयोरिति** । अनभिहिते इति वर्तते । तद्वशात् 'रामो वालिनं हन्ति' इत्यत्र कर्त्रर्थस्य तिङा उक्तत्वात् रामशब्दस्य न तृतीया । 'रामेण बाणेन हतो वाली' इत्यत्र हतः इति कर्मणि क्तः । रामेण इति अनुक्ते कर्तरि बाणेन इति अनुक्ते करणे च तृतीया ॥ **कर्मणा यमभिप्रैतीति** । संप्रदीयते अस्मै इति संप्रदानमन्वर्थसंज्ञा । तद्वशात् कस्य कर्मणा इत्याकाङ्क्षायां दानस्य इति लभ्यते । अत आह – दानस्य कर्मणा । अभिप्रैति अभिमुखं प्रकर्षेण एति गच्छति, दानक्रियोद्देश्यं करोतीत्यर्थः ॥ **नमःस्वस्तिस्वाहेति** । एभिः संयुक्तात् शब्दाच्चतुर्थीत्यर्थः । इयं उपपदविभक्तिः, पदान्तरसंयोगजन्यत्वात् । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायेन नमस्करोति देवानित्यत्र तु द्वितीयैव न चतुर्थी । सूत्रे 'अलं' पदेन 'प्रभुः' 'शक्तः' इत्यादि पर्याप्त्यर्थकशब्दानां ग्रहणम् । न तु भूषणार्थस्य, न वा वारणार्थस्य । तेन 'कुमारीणामलङ्कारः' 'अलमनेन' इत्यादिषु न चतुर्थीप्रयोगः । 'अलं भूषणपर्याप्तिशक्तिवारणवाचकम्' इत्यमरः ॥ **ध्रुवमपाय इति** । अपाये विश्लेषे वियोगे, ध्रुवं अवधिभूतं, यस्मादन्यस्य वियोगो भवति तत्, स्थिरं

ध्रुवमवधिभूतं कारकं तदपादानं स्यात् ॥ **अपादाने पञ्चमी** । २ । ३ । २८ । ग्रामादायाति । धावतोऽश्वात्पततीत्यादि ॥

**षष्ठी शेषे** । २ । ३ । ५० । कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः संबन्धः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठ्येव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधो दकस्योपस्कुरुते । भजे शंभोश्चरणयोः ॥

**आधारोऽधिकरणम्** । १ । ४ । ४५ । कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणं स्यात् ॥ **सप्तम्यधिकरणे च** । २ । ३ । ३६ । अधिकरणे

---

यथा ग्रामादायाति । चलं यथा धावतोऽश्वात्पतति । **षष्ठी शेष इति** । उक्तादन्यः शेषः । कर्मादिकारकेषु द्वितीयादिविभक्तयः प्रातिपदिकाद्यर्थेषु च प्रथमा उक्तपूर्वा, ततोऽन्यस्मिन् अर्थे स्वस्वामिभावादिसंबंधे षष्ठी भवति । आदिपदेन अवयवावयविसंबंधे जन्यजनकसंबंधे च । यथा पशोः पादः । पितुः पुत्रः ॥ **कर्मादीनामपीति** । कर्मादीनां कर्मत्वाविवक्षायां संबंधसामान्यविवक्षायां षष्ठीइत्यर्थः । सतां गतम् । भावे क्तः । अत्र 'कर्तृकरणयोस्तृतीया' इति तृतीया न विवक्षिता । सर्पिषो जानीते । सर्पिषा करणेन प्रवर्तते इत्यर्थः । करणत्वाविवक्षायां षष्ठी । 'ज्ञोऽविदर्थस्य करणे' इति सूत्रेण ज्ञाधातोरत्र ज्ञानभिन्ने प्रवृत्त्यर्थे प्रयोगः । मातुः स्मरति । मातरं स्मरतीत्यर्थः । कर्मत्वाविवक्षायां षष्ठी ॥ **एधोदकस्येति** एधश्च उदकं चैषां समाहारः एधोदकम् । अत्र एधशब्दः पुंल्लिङ्गोऽदन्तः । यद्वा एधांसि दकं चैषां समाहारः । उदकपर्यायो दकशब्दः 'भुवनममृतं जीवनीयं दकं च' इति हलायुधे । अथवा एधः कर्ता । उपस्कुरुते गुणान्तरमाधत्ते । **भजे शंभोरिति** । अत्र कर्मत्वाविवक्षा ॥ **आधार इति** । कारके इत्यधिकृतं प्रथमान्तत्वेन विपरिणम्यते । आध्रियतेऽस्मिन् क्रिया इत्याधारः । अधिकरणे घञ् । साक्षात्क्रियाधारस्य तु न अधिकरणसंज्ञा संभवति, पराभ्यां कर्तृकर्मसंज्ञाभ्यां बाधितत्वादत आह—कर्तृकर्मद्वारा तन्निष्ठक्रियायाः इति ॥ **सप्तम्यधिकरण इति** । 'दूरान्तिकार्थेभ्यो द्वितीया च' इति पूर्वसूत्रात् दूरान्तिकार्थेभ्य इति पदं चकारेणानुकृष्यते । औपश्लेषिकः—उपश्लेषः संयोगः तेन निर्वृत्तः । यथा कटे आस्ते । अत्र कटः कर्तृद्वारा क्रियाया औपश्लेषिक आधारः । स्थाल्यां पचति ।

सप्तमी स्यात् । चकाराद्दूरान्तिकार्थेभ्यः । औपश्लेषिको वैषयिकोऽभिव्यापकश्चे- त्याधारस्त्रिधा । कटे आस्ते । । स्थाल्यां पचति । मोक्षे इच्छास्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा ॥ **इति विभक्त्यर्थाः ॥**

## अथ समासप्रकरणम् ॥

समासः पञ्चधा । तत्र समसन समासः । स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः १ प्रायेण पूर्वपदार्थप्रधानोऽव्ययीभावो द्वितीयः २ प्रायेणोत्तरपदार्थप्रधानस्तत्पुरुषस्तृतीयः ३ ( तत्पुरुषभेदः कर्मधारयः ।

---

स्थाली तण्डुलात्मककर्मद्वारा पाकक्रियाया औपश्लेषिक आधारः मोक्षे इच्छा अस्ति । मोक्षविषया इच्छा इत्यर्थः । वैषयिक. विषयकृतः । सर्वस्मिन्नात्माऽस्ति सर्वव्यापक आत्मा इत्यर्थः । अभिव्यापकः संबधः । चकारः किमर्थः । वनस्य दूरे अन्तिके वा । अत्र 'दूरान्तिकार्थेभ्यो द्वितीया च' इति सूत्रेण द्वितीया, पञ्चमी, तृतीया च भवन्ति । वनस्य दूरं, दूरात्, दूरेण वा । एवमन्तिकशब्दादपि । **इति विभक्त्यर्थाः ।**

## अथ समासप्रकरणम् ।

**समासः पञ्चधा इति ।** वक्ष्यमाणप्रकारेण समासः पञ्चविधो भवति । सम्पूर्वात् असधातोः भावद्योतके घञि परतः, प्रत्ययस्य ञित्त्वात् 'अत उपधायाः' इति उपधावृद्धौ समासः इति रूपम् । समसनं एकस्या वृत्तौ निक्षेपः समासः सक्षेपः इत्यर्थः । विशेपसंज्ञाविनिर्मुक्तः— तत्पुरुषबहुव्रीह्यादिसंज्ञारहित इत्यर्थः । पूर्वपदस्य अर्थः प्रधान यस्मिन् स पूर्वपदार्थप्रधानः । 'अधिहरि' इत्यादिषु अव्ययीभावसमासोदाहरणेषु अव्ययार्थस्य प्राधान्य वर्तते । प्रायेण इति किम् । क्वचित् सूपप्रति इत्याद्यव्ययीभावसमासेषु उत्तरपदप्राधान्य दृश्यते । **प्रायेणोत्तर- पदार्थप्रधान इति** । यथा राजपुरुषः इति तत्पुरुषे पुरुषशब्दस्य प्राधान्यम् । प्रायेण इति किम् । क्वचित् अतिमाल इत्यादिषु

कर्मधारयोभेदो द्विगुः ।) प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः ४ प्रायेणोभयपदार्थप्रधानो द्वन्द्वः पञ्चमः ५ ॥ **समर्थः पदविधिः** । २।१।१। पदसबन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥ **प्राक्कडारात्समासः**

---

तत्पुरुषोदाहरणेषु पूर्वपदप्राधान्यम् । तत्पुरुषस्य भेदः विशेषः 'तत्पुरुषः समानाधिकरणः कर्मधारयः' इति सूत्रात् । **प्रायेणान्यपदार्थेति** । यथा पीताम्बरः इति बहुव्रीहिसमासे न पीतशब्दस्य न वाऽम्बरशब्दस्य प्राधान्य किन्तु विष्णुः इत्यन्यपदार्थस्येति भावः । प्रायेण इति किम् । क्वचित् द्वित्राः इत्यादिबहुव्रीहिषु उभयपदार्थः प्रधानम् । **प्रायेणोभयपदार्थेति** । यथा रामकृष्णौ । प्रायेण इति किम् । क्वचित् दन्तोष्ठम् इत्यादिद्वन्द्वेषु समाहारार्थः प्रधानम् ॥ **समर्थः पदविधिरिति** । समर्थशब्दः लक्षणया समर्थाश्रितः इत्यर्थे बोध्यः । समर्थशब्दस्य द्वावर्थौ –( १ ) सम्प्रेक्षितः आकाङ्क्षितः अर्थः यस्य स समर्थः साकाङ्क्षः सापेक्षः इति यावत् । ( २ ) सम्बद्धः अर्थः यस्य स समर्थः सबद्धार्थः इत्यर्थः । व्यपेक्षारूप प्रथमं सामर्थ्य वाक्ये दृश्यते यतस्तत्र परस्परसाकाङ्क्षाण्येव पदानि प्रयुज्यन्ते । एकार्थीभावरूप द्वितीय तु तद्धितसमासादिषु वृत्तिषु । विधीयते इति विधिः । पदस्य विधिः पदविधिः, सम्बन्धे षष्ठी । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च पदविधयो वृत्तयो वा । एते विधयः सम्बद्धार्थेष्वेव शब्देषु प्रवर्तन्ते । तेन 'पश्यति कृष्णं श्रितो देवदत्तम्' इत्यादिषु स्थलेषु 'द्वितीया श्रितातीत –' इति सूत्रेण कृष्णश्रितः इति समासो न भवति । सामर्थ्याभावात् । अस्मिन् सूत्रे पदग्रहण किमर्थम् । वर्णविधौ सामर्थ्यस्यानपक्षेणात् । यथा – तिष्ठतु दध्यशानत्व शाकेन । अत्र सामर्थ्याभावेऽपि यणादेशो भवति ॥ **प्राक्कडारात् – इति** । कडारशब्दः यस्मिन् सूत्रे प्रयुज्यते तस्मात् 'कडाराः कर्मधारये' ( २, २, ३८ ) इति सूत्रात् प्राक् यान् इत ऊर्ध्वमनुक्रमिष्यामः ते समाससज्ञा ज्ञातव्याः इत्यर्थः । 'प्राक्' पद द्विरावर्तते तेन समाससज्ञा प्राक्, ततः अव्ययीभावादयः सज्ञा भवन्तीत्यर्थः । अन्यथा

। २ । १ । ३ । कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥

**सह सुपा** । २ । १ । ४ । सुप् सुपा सह वा समस्यते । समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । परार्थाभिधान वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्त-धातुरूपाः पञ्च वृत्तयः । वृत्त्यर्थावबोधक वाक्य विग्रहः । स च

---

'आ कडारादेका सज्ञा' इति सूत्रेण याः परा अनवकाशाश्च ता एव अव्ययीभावादयः सज्ञा भवेयुः, न तु समाससज्ञा । 'सह सुपा' इत्यादिषु 'समासः' इति पदमधिकृतम् । तेन समस्यते इति समासः । 'अकर्तरि च कारके' इति सूत्रेण कर्मणि घञ् । **सह सुपेति** । सुप् इति समासः इति च वर्तते । तदन्तविधिना सुबन्तं सुबन्तेन सह समस्यते इत्यर्थः । अय समासो वैकल्पिकः । अव्यय विभक्ति–' इत्यादिसूत्रेषु सूत्रकारेण समाससज्ञाविधानात् । अन्यथा प्रकृतसूत्रेणैव सर्वत्र समाससज्ञाया सिद्धाया अव्ययीभावादिविधिषु समाससज्ञाविधान व्यर्थ स्यात् । पूर्व भूतः इति विग्रहे 'सह सुपा' इति सूत्रेण समासे, 'कृत्तद्धितसमासाश्च' इति सूत्रेण प्रातिपदिकसज्ञाया कृतायां 'सुपो धातुप्रातिपदिकयोः' (एतयोरवयवस्य सुपो लुक् स्यात् ।) इति सूत्रेण सुलोपे, पूर्वभूत इति प्राप्ते 'भूतपूर्वे चरट् ।' (भूतपूर्वे वर्तमानात् प्रातिपदिकात् स्वार्थे चरट् स्यात्, आढ्यो भूतपूर्वः आढ्यचरः ।) इति सूत्रे भगवताऽऽचार्येण भूतपूर्वे इति शब्दप्रयोगात् भूतशब्दस्य पूर्वनिपातः । प्रातिपदिकार्थे भूतपूर्वः इति प्रथमा । **परार्थाभिधानमिति** । प्रत्ययान्तर्भावेन परपदान्तर्भावेन वा यः कस्यचित् पदस्य विशिष्टोऽर्थो भवति स परार्थः । सोऽभिधीयतेऽनेनेति परार्थाभिधानम् । करणे ल्युट् । कृत् – यथा कुम्भकारः इत्यत्र 'कुम्भ' इति पद 'कार' पदेन सबद्ध सद्विशिष्ट अर्थान्तरं बोधयति तेन इय कृद्वृत्तिः । तद्धितः-- शैवः, वैनतेयः इत्यादिः । एकशेषः — पितरौ । सन् आदिः येषा ते सनादयः प्रत्ययाः । आदिशब्देन क्यच्, काम्यच्, क्यङ् – इत्यादयो ग्राह्याः । ते अन्ते यस्य स सनाद्यन्तः धातुः, यथा

लौकिकोऽलौकिकश्चेति द्विधा । तत्र पूर्वं भूत इति लौकिकः । पूर्व अम् भूत सु इत्यलौकिकः । भूतपूर्वः । भूतपूर्वे चरडिति निर्देशाद् भूतशब्दस्य पूर्वनिपात. । ( **इवेन सह समासो विभक्त्यलोपश्च ।** ) वागर्थौ इव वागर्थाविव । **इति केवलसमासः ॥ १ ॥**

## अथाव्ययीभावः ।

**अव्ययीभावः** । ३ । १ । ५ । अधिकारोय प्राक् तत्पुरुषात् ॥
**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु** । २ । १ । ६ ।
विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन सह नित्यं समस्यते ।

---

जिगमिषति, पुत्रकाम्यति इत्यादिषु । विशेषेण गृह्यते ज्ञायतेऽनेनेति विग्रहः । लौकिकः – परिनिष्ठितत्वात् व्याकरणशास्त्रनियमानुरोधेन प्रयोगार्हः । अलौकिकः–तादृशप्रयोगानर्हः शब्दविभक्तिमात्रप्रदर्शकः । **इवेन समास इति** । वार्त्तिकमिदम् । ' पूर्वपदप्रकृतिस्वरत्वं च ' इत्यधिकं भाष्ये दृश्यते इदं वार्तिकं 'इव' शब्दस्य पूर्वनिपातनिवृत्त्यर्थम् । अन्यथा 'सह सुपा' इति सूत्रेण तस्य कदाचित् पूर्वनिपातोऽपि स्यात् । वागर्थाविव – वाक् च अर्थश्च वागर्थौ, तौ इव वागर्थाविव । अत्र विभक्तिर्न लुप्ता । अनित्योऽयं समासः, 'तेन उद्बाहुरिव वामनः' इति कालिदासोक्तौ इवशब्दस्य उपमानात्पूर्वं प्रयोगात् समासाभावो दृश्यते ॥ **अव्ययीभाव इति** । अधिकारसूत्रमिदम् । तत्पुरुषः । ( २, १, २२ ) इति सूत्रात् प्राक् यानितं ऊर्ध्वमनुक्रमिष्यामस्तेऽव्ययीभावसंज्ञा वेदितव्या इत्यर्थः ॥ **अव्ययं विभक्तीति** । 'सुप् सुपा' इति 'समासः' इति च वर्तते । विभक्ति इत्यनेन विभक्त्यर्थो विवक्षितः । विभक्त्यर्थादिष्वर्थेषु वाच्येषु इति सप्तम्यर्थः । समासस्य पदविधित्वात् विभक्त्यर्थादिवाच्येषु अव्ययं समर्थेन सुपा सह समस्यते अव्ययीभावश्च समासो भवतीत्यर्थः । **नित्यमिति** । कतिपयसूत्रानन्तरं विभाषा । ( २, १, ११, ) इति सूत्रेण केषाञ्चिदव्ययीभावानां विकल्पविधानात् तत्पूर्वं विहिता अव्ययी-

प्रायेणाविग्रहो नित्यसमासः प्रायेणास्वपदविग्रहो वा । विभक्तौ । हरि ङि अधि इति स्थिते ॥ **प्रथमानिर्दिष्टं समास उपसर्जनम्** । १ । २ । ४३ । समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसञ्ज्ञं स्यात् ॥ **उपसर्जनं पूर्वम्** । २ । २ । ३० । समासे उपसर्जनं प्राक् प्रयोज्यम् । इत्यधेः प्राक् प्रयोग. । **सुपो लुक्** । एकदेशविकृतस्यानन्यत्वात्प्रातिपदिकसंज्ञाया स्वाद्युत्पत्तिः । अ-व्ययीभावश्चेत्यव्ययत्वात्सुपो लुक् । अधिहरि ॥ **अव्ययीभावश्च** । २ । ४ ।

---

भावसमासा नित्या इत्याचार्येण ज्ञाप्यते । नित्यसमासं व्याचष्टे – **प्रायेणा-विग्रह इति** – प्रायेण यस्य अलौकिकविग्रहवाक्यं न विद्यते स नित्यसमासः। अस्वपदविग्रहः – यस्य विग्रहवाक्ये समासघटकपदा।न प्रयोक्तु न शक्यन्ते यथा ' हरौ इति अधिहरि ' इत्यत्र विग्रहवाक्ये अधिशब्दो न प्रयुक्तः । प्रायेण इति किम् । क्वचित् ' प्रत्यर्थम् ' इत्यादिसमासेषु एतादृशो विग्रहो विद्यते एव । अव्ययं विभक्ति – इति सूत्रस्य विभक्त्यर्थे उदाहरणमाह – **हरि ङि अधि** । हरौ इत्यर्थे हरि अधि इत्येतयोः समासे द्वयोः पदयोः कतरस्य पूर्व विन्यासः कर्तव्य इत्याशकायां आह – **प्रथमानिर्दिष्टमिति ।** समासे लक्षणया समासशास्त्रे समासविधायकसूत्रेष्वित्यर्थः । प्रथमानिर्दिष्ट – यथा ' अव्ययं विभक्ति – ' इत्यादौ अव्यय इति पद प्रथमानिर्दिष्टम् । ' उपसर्जनम् ' ( गौणम् ) इत्यन्वर्थसंज्ञेयम् । न त्वाचार्यप्रयुक्ता टि घु इत्यादिवत् केवलसञ्ज्ञा । **उपसर्जनं पूर्वमिति ।** समासे कर्तव्ये यदुपसर्जनसंज्ञं तत्समासे पूर्व प्रयोक्तव्यम् । एतेन अधे. हरिशब्दात् प्राक् प्रयोगः । अधिहरि ङि इति जाते, समासत्वात्प्रातिपदिकसंज्ञाया ' सुपो धातु -- ' इति सूत्रेण सुब्लुकि अधिहरि इति जातम् । **एकदेशविकृतमनन्यवत्** ( यदेकेनैवांशेन विपरिणतं तत् भिन्नमिति न गण्यते, ' छिन्नेऽपि पुच्छे श्वा श्वैव न चाश्वो न च गर्दभः ' इति न्यायात् ) इति परिभाषया सुपो लोपानंतरमपि प्रातिपदिकसंज्ञानपायात् स्वादिविभक्त्युपत्ति. ॥ **अव्ययीभावश्चेति** । अव्ययीभावश्च अव्यय स्यात् । एतेन अधिहरि इत्यस्य अव्ययत्वात् ' अव्ययादाप्सुप. ।' इति सुपो लोपे अधिहरि इति सिद्धम् ॥ **अव्ययीभावश्चेति** । इद भिन्न सूत्रम् । नपुंसकमिति

१८। अय नपुंसकं स्यात् । गाः पातीति गोपाः तस्मिन्नित्यधिगोपम् ॥ **नाव्ययीभावादतो ऽम्त्वपञ्चम्याः** ।२।४।८३। अदन्तादव्ययीभावात्सुपो न लुक् तस्य पञ्चमी विना अमादेशश्च स्यात् ॥ **तृतीयासप्तम्योर्बहुलम्** ।२।४।८४। अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । उपकृष्णम्, उपकृष्णेन । मद्राणां समृद्धिः सुमद्रम् ।

---

वर्तते । तेनाह—अयं नपुंसकं स्यात् । गोपायति इति गोपाः । 'गुपू रक्षणे' इति धातोः विच् प्रत्ययः । आयप्रत्ययान्तस्याकारस्य 'अतो लोपः' इति लोपे 'लोपोव्योर्वलि' इति योगने च यकारलोपे वेरपृक्तस्येति वकारलोपे, विभक्ति–कार्ये च गोपाः इति रूपम् । अन्या व्युत्पत्ति दर्शयति । गाः पाति इति गोपाः, गोशब्द उपपदे पाधातोर्विचूप्रत्ययः । गोपि इति आधिगोपम् । अधि गोपा ङि इति स्थिते 'सुपो धातुप्रातिपदिकयोः' इति ङेर्लोपे, प्रातिपदिकत्वात् सौ समागते, 'अव्ययीभावश्च' इति नपुंसकत्वात् 'ह्रस्वो नपुंसके प्रातिपदिकस्य, इति अन्त्याकारस्य ह्रस्वत्वे, अधि गोप स् जाते अव्ययत्वात् सकारस्य लोपे प्राप्ते आह **नाव्ययीभावादिति** । सुपो लुक् इति वर्तते । 'अतः' इति 'अव्ययीभावात्' इत्यस्य विशेषणम् । तदन्तविधिना 'अदन्तादव्ययीभावात्' इत्यर्थः । 'अपञ्चम्यास्तु अम्' इति वाक्यान्तरम् । पञ्चमीभिन्नसुपः अम् आदेशो भवति । पञ्चम्या तु लुगमादेशौ उभावपि न भवत इत्यर्थः । तेन अधिगोप अम् इति जाते 'अमि पूर्वः' इत्यनेन अधिगोपम् इति रूपम् । अतः इति किम् अधिकुमारि । अपञ्चम्याः इति किम् उपकुम्भात् आनय ॥ **तृतीयासप्तम्योरिति** । पूर्वेण नित्यं अम्भावे प्राप्ते इदमुच्यते । अतोऽव्ययीभावात् अम् इति अनुवर्तते । बहुलम्—क्वचिद् अमादेशो भवति क्वचिन्न भवतीत्यर्थः । तृतीया, 'कृष्णस्य समीपेन' इत्यर्थे उपकृष्णम्, उपकृष्णेन । सप्तमी, कुम्भस्य समीपे इत्यर्थे उपकुम्भं उपकुम्भे वा निधेहि । अव्यय विभक्ति इति सूत्रस्यावशिष्टांशं व्याचष्टे—समीपे, कृष्णस्य समीपेन उपकृष्णम्, उपकृष्णेन । समृद्धिः—मद्राणां समृद्धिः सुमद्रम्, सम्मद्रम् इति पाठान्तरम् । समृद्ध्यर्थकस्य सुशब्दस्य सम्शब्दस्य वा मद्रशब्देन सह समासः।मद्राणामाधिक्येन

यवनाना व्यृद्धिर्दुर्यवनम् । माक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । अर्थमर्थ प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ॥ **अव्ययीभावे चाकाले** । ६ । ३ । ८१ । सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत्सचक्रम् । सदृशः सख्या ससखि । क्षत्राणा संपत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साग्नि ।

---

समृद्धिर्वर्तते इत्यर्थः । व्यृद्धिः – ऋद्धेरभावः । यवनाना व्यृद्धिः दुर्यवनम् । अर्थाभावः – वस्तुनोऽभावः, मक्षिकाणामभावः निर्मक्षिकम् । अत्ययः अपगमः । असंप्रति यत् संप्रति वर्तमानकाले न युज्यते । शब्दप्रादुर्भावः शब्दस्य प्रकाशः । इतिहरि – हरिशब्दो लोके प्रकाशते इत्यर्थः । इति अव्ययं प्रकाशार्थकम् । यथा इत्यस्य चत्वारोऽर्थाः । तेषु अर्थेषु यदव्यय वर्तते तत् समर्थेन सुबन्तेन सह समस्यते । सादृश्यार्थे सहशब्देन समासः – हरेः सादृश्यं इत्यर्थे सह हरि इति स्थिते आह – **अव्ययीभावे चेति ।** सहस्य सः इति वर्तते । अकाले इति किम्, सहपूर्वाह्णम् । आनुपूर्व्यम् – पूर्वस्य क्रमेणानुपूर्वम् । ततः स्वार्थे ष्यञ् । अनुज्येष्ठं प्रविशन्तु – ज्येष्ठानुपूर्व्या इत्यर्थः । सादृश्यम् – सदृशः सख्या ससखि इत्यत्र सदृशार्थकसहशब्दस्य सखीशब्देनाव्ययीभावः । ननु प्राक् यथार्थेषु सादृश्यमुक्तं, किमर्थं पुनस्तस्येह ग्रहणम् । उच्यते – यथार्थेषु प्रधानसादृश्यस्यैव ग्रहणम् । इह तु गौणसादृश्यस्येति भेदः । सदृशशब्देन सादृश्यवान् साक्षाद् उच्यते सादृश्यं तु परपरया, अतः 'सदृशः सख्या ससखि इत्यत्रोदाहरणम्, हरेः सादृश्यं सहरि इति तु पूर्वत्रोक्तम् । सम्पत्तिः अनुरूपः आत्मभावः, आत्मनोऽनुरूपं कर्मेत्यर्थः । न तु समृद्धिः, तस्याः पूर्वमेवोक्तत्वात् । यथा 'सक्षत्रं शालंकायनानाम् – ' तेषा क्षात्रभावोऽनुरूपः इत्यर्थः । सतृणम् – किञ्चिदप्यभ्यवहार्यमपरित्यज्येत्यर्थः । साग्नि – अग्निशब्देन तत्प्रतिपादकः कश्चिद्

**नदीभिश्च** । २ । १ । २० । नदीभिः सह संख्या समस्यते । समाहारे चायमिष्यते । पञ्चगङ्गम्, द्वियमुनम् ॥

**तद्धिताः** । ४ । १ । ७६ । आपञ्चमसमाप्तेरधिकारोऽयम् ॥ **अव्ययीभावे शरत्प्रभृतिभ्यः** । ५ । ४ । १०७ । शरदादिभ्यष्टच् स्यात्समासान्तोऽव्ययीभावे । शरदः समीपमुपशरदम् । प्रतिविपाशम् । जराया जरश्च । उपजरसमित्यादि ॥

---

ग्रन्थो विवक्षितः तत्पर्यन्तमित्यर्थः । नदीभिश्च – इति । संख्या इति वर्तते । बहुवचननिर्देशात् न नदीशब्दः किं तु नद्यर्थो विवक्षितः । तेन गंगा यमुना इति नदीविशेषवाचकैः नद्यर्थकैश्च शब्दैः समासो भवति यथा सप्तगोदावरम् । **समाहारे चायमिष्यत इति** । समाहारेऽपि अव्ययीभाव एवायं न द्विगुः । पञ्चाना गङ्गाना समाहारः इत्यर्थे पञ्चन् आम् गंगा आम् इति स्थिते, सुब्लुकि 'न लोपः प्रातिपदिकान्तस्य' इति सूत्रेण नकारलोपे 'अव्ययीभावश्च' इति नपुंसकत्वे, 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति आकारस्य ह्रस्वत्वे, पञ्चगङ्ग इति जाते, प्रातिपदिकत्वात् सौ समागते, तस्य अमादेशे पूर्वरूपत्वे च पञ्चगंगम् इति रूपम् । अव्ययीभावसमासान्तप्रत्ययान् विधित्सुः प्रथमं तेषां तद्धितसंज्ञा विधत्ते – **तद्धिता इति** । आ पञ्चमपरिसमाप्तेः – सर्वे समासान्तप्रत्ययाः पञ्चमाध्यायस्य चतुर्थपादे विहिताः । अतः तद्विधायकसूत्रेषु तद्धिताधिकारो विद्यत एव । समासान्तप्रत्ययास्तद्धिताः स्वार्थे भवन्ति ॥ **अव्ययीभावे चेति** । टच् इति समासान्ताः इति च वर्तते । शरदः समीपमुपशरदम् समीपार्थेऽव्ययीभावः । टचि कृते उपशरद इत्यस्य अव्ययीभावसंज्ञाया प्रातिपदिकत्वात् सौ समागते 'नाव्ययीभावात् –' इति तस्य अमादेशे उपशरदम् इति रूपम् । विपाशः अभिमुखम् प्रतिविपाशम् । 'जराया जरस् च' इति गणसूत्रं शरदादिगणेऽन्तर्भूतम् । अस्मिन् गणे जराया जरस् आदेशो भवतीत्यर्थः ॥ **अनश्चेति** । अव्ययीभावे इति वर्तते तच्च अनः इति पञ्चमीवशात् पञ्चम्यन्ततया विपरिणम्यते । तदन्तविधिना अन्नन्तादव्ययीभावात् इत्यर्थः । राज्ञः समीपे इत्यर्थे उप राजन् अस्

**अनश्च** ।५।४।१०८। अन्नन्तादव्ययीभावाट्टच् स्यात् ॥ **नस्तद्धिते** ।६।४।१४४। नान्तस्य भस्य टेर्लोपस्तद्धिते । उपराजम्, अध्यात्मम् ॥ **नपुंसकादन्यतरस्याम्** ।५।४।१०९। अन्नन्तं यत्क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मम्, उपचर्म ॥ **झयः** ।५।४।१११। झयन्तादव्ययीभावाट्टज्वा स्यात् । उपसमिधम् उपसमित् ॥ **इत्यव्ययीभावः** ॥ २ ॥

## अथ तत्पुरुषः ।

**तत्पुरुषः** ।२।१।२२। अधिकारोऽयम् प्राग्बहुव्रीहेः ॥ **द्विगुश्च** ।२।१।२३। द्विगुरपि तत्पुरुषसञ्ज्ञकः स्यात् ॥ **द्वितीया श्रितातीत-**

---

इति स्थिते, सुब्लुकि प्रकृतसूत्रेण टचि, उप राजन् अ इति जाते 'यचि भम्' (यकारादिषु अजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात्') इति सूत्रेण भसञ्ज्ञाया आह **नस्तद्धित इति** । भस्य इति अधिकृतम् । तत् नः इति षष्ठ्यन्तेन अन्वेति । तदन्तविधिना नान्तस्य भस्येत्यर्थः । टेः इति लोपः इति च वर्तते । तदाह – नान्तस्य भस्य – इति । उपराजन् अ इत्यत्र टिलोपे प्रातिपदिकत्वात् सौ समागते, तस्य अमादेशे च उपराजम् इति रूपम् । एवं आत्मनि इति अध्यात्मम् ॥ **नपुंसकादिति** । अनः टच् इति वर्तते । टचि कृते पूर्ववत् उपचर्मम् । टजभावे तु उप चर्मन् इति जाते प्रातिपदिकसंज्ञया सौ समागते, 'स्वमोर्नपुंसकात्' इति तस्य लुकि 'न लोपः प्रातिपदिकान्तस्य' इति नकारलोपे उपचर्म इति रूपम् ॥ **झय इति** । अव्ययीभावे इति टच् इति अन्यतरस्यामिति च वर्तते । झय् इति प्रत्याहारः । तदन्तविधिना झयन्तादव्ययीभावादित्यर्थः । टचि कृते उपसमिधम् । टजभावे उपसमिद् । **इत्यव्ययीभावः** ।

## अथ तत्पुरुषः ।

**तत्पुरुष इति** । प्राग्बहुव्रीहेः — शेषो बहुव्रीहिः (२, २, २३) इत्यतः प्राक् इत्यर्थः ॥ **द्वितीया श्रितातीतेति** । प्रत्ययग्रहणे

**पतितगतात्यस्तप्राप्तापन्नैः** । २ । १ । २४ । द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः । कृष्ण श्रितः कृष्णश्रित इत्यादि ॥ **तृतीया तत्कृतार्थेन गुणवचनेन** । २ । १ । ३० । तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेनार्थशब्देन च सह वा प्राग्वत् । शङ्कुलया खण्डः शङ्कुलाखण्डः । धान्येनार्थो धान्यार्थः । तत्कृतेति किम् । अक्ष्णा काणः ॥ **कर्तृकरणे कृता बहुलम्** । २ । १ । ३२ । कर्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखैर्भिन्नो

---

तदन्तग्रहणमिति न्यायेन द्वितीयाशब्देन द्वितीयान्त गृह्यते । सुप् सुपा इति वर्तते । तदन्तविधिना बहुवचनविपरिणामेन च सुपा इत्यस्य सुबन्तैरित्यर्थः । सुबन्तैः श्रितादिभिः इत्यस्य श्रितादिप्रकृतिकैः सुबन्तैरित्यर्थः पर्यवस्यति ॥ **'विभाषा'** ( २, १, ११ ) इत्यधिकारात् वैकल्पिका इमे समासाः । अत्यस्तः – नद्यत्यस्तः नदीमतिक्रान्तः इत्यर्थः ॥ **तृतीया तत्कृतार्थेन – इति** । पूर्ववत् तृतीयापदेन तृतीयान्तं लक्ष्यते । 'तत्कृत' इति लुप्ततृतीयाक गुणवचनेन इत्यस्य विशेषणम् । तच्छब्देन तृतीयान्तं परामृश्यते । तृतीयान्तार्थकृतगुणवचनेन अर्थशब्देन च समस्यते इत्यर्थः। गुणमुक्तवान् गुणवचनः । कृत्यल्युटो बहुलमिति भूते कर्तरि ल्युट् । **तेन** यः गुणमुक्त्वा तद्गुणयुक्त द्रव्यमाह स गुणवचनः खण्डः छिन्नः इत्यादिः । न तु केवलगुणवाचकः, यथा पाटवं शौक्ल्यमित्यादि । शकुलया शस्त्रविशेषेण खण्डः भिन्न वस्तु शंकुलाखण्ड । अर्थशब्दः धनवाची । धान्येन अर्थः धान्यार्थः धान्येन प्राप्त धनमित्यर्थः । तत्कृत – इति किम् । अक्ष्णा काणः इत्यत्र काणत्व न अक्षिकृतम् । किंतु कर्मकृतमिति भावः । अत्र न हेतौ तृतीया किन्त्वङ्गविकारे ॥ **कर्तृकरणे कृतेति** । कर्ता च करणं च कर्तृकरणम् । तृतीया इति वर्तते । कृता इति तृतीया — कृदन्तेन इत्यर्थः । हरित्रातः – कर्तरि तृतीयया समासः । नखभिन्नः करणे तृतीया । 'बहुलम्' इति किम् । कर्तरि

नखभिन्नः ( **कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणम् ।** नखनिर्भिन्नः॥ )
**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** । २ । १ । ३६ । चतुर्थ्यन्तार्थाय यत्तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। यूपाय दारु यूपदारु। तदर्थेन प्रकृतिविकृतिभाव एवेष्टः। तेनेह न। रन्धनाय स्थाली। ( **अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् ।** ) द्विजार्थः सूपः, द्विजार्था यवागूः, द्विजार्थं पयः। भूतबलिः, गोहितम्, गोसुखम्, गोरक्षितम्, ॥ **पञ्चमी भयेन** ।

---

करणे च था तृतीया तदन्तमपि बहुलग्रहणात् क्वचिन्न समस्यते। यथा दात्रेण लूनवान्। क्वचित्तु विभक्त्यन्तरमपि समस्यते बहुलग्रहणादेव यथा गलेचोपकः (तत्त्व०)॥ **कृद्ग्रहणे गतिकारकेति** । परिभाषेयम्। केवलेन कृदन्तेन यो विधिः उक्तः स गतिकारकसमभिव्याहृतेनापि तेन भवति इत्यर्थः । गतिरिति प्रादीनामुपसर्गाणा ऊर्याद्यव्ययाना च संज्ञा। नखनिर्भिन्नः–अत्र गतिपूर्वपदेन कृदन्तेन नखशब्दस्य समासः॥ **चतुर्थीति**। चतुर्थीशब्देन चतुर्थ्यन्त लक्ष्यते। तदर्थम्, सः अर्थः प्रयोजन यस्य तत् तदर्थम्। तच्छब्देन अत्र चतुर्थ्यन्त परामृश्यते । तेनाह–चतुर्थ्यन्तार्थाय यत् तद्वाचिना चतुर्थ्यन्तं समस्यते। यथा यूपाय दारु इत्यत्र यूपाय इति चतुर्थ्यन्तम्। तदर्थ यत् दारु तद्वाचिना यूपशब्दः समस्यते। **तदर्थेन प्रकृतिविकृतिभाव इति** । यथा दारु प्रकृतिः, यूपः विकारः। एतच्च सूत्रे बलिरक्षितशब्दयोः प्रयोगेण ज्ञाप्यते। अन्यथा यक्षाय बलिः इत्यादिष्वपि उदाहरणेषु तादर्थ्यदर्शनात् बलिशब्दस्य पृथगुपादानं नावश्यकम् । तदर्थशब्देन प्रकृतिविकृतिभावस्य लक्षणात् तस्य च रन्धनाय स्थाली इत्यत्राभावात् नात्र चतुर्थीसमासो भवति। **अर्थेन नित्यसमास इति** । अर्थशब्देन चतुर्थ्यन्तं नित्यं समस्यते। समासस्य विशेषणत्वात् तद्विशेष्यस्य यल्लिंगं तदेव तस्यापि लिंगं भवतीत्यर्थः। अन्यथा 'परवल्लिंग द्वन्द्वतत्पुरुषयोः' इति नियमेन अर्थशब्दस्य नित्यं पुंल्लिगत्वात् सर्वत्र पुल्लिगतैव स्यात्। नित्यसमासत्वेन अस्वपदविग्रहो ज्ञाप्यते । गोभ्यो रक्षितं (तृणादिक) गोरक्षितम् । **पञ्चमी भयेनेति** । भयेन भयशब्देन। न तु भयार्थकैः त्रासादिभिः, अन्यथा 'भयभीतभीतिभीभिरिति वाच्यम्' इति

२। १। ३७। चोराद्भयं चोरभयम् ॥ **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन** ।२।१।३९। **पञ्चम्याः स्तोकादिभ्यः** ।६।३।२। अलुक् स्यादुत्तरपदे स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रादागतः ॥ **षष्ठी** ।२।२।८। सुबन्तेन प्राग्वत् । राजपुरुषः ॥

**पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे** ।२।२।१। अवयविना सह पूर्वादयः समस्यन्ते एकत्वसङ्ख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकाधिकरणे किम् । पूर्वश्छात्राणाम् ॥ **अर्धं नपुंसकम्** ।२।२।२। समांशवाच्यर्धशब्दो

---

वार्त्तिकं नावश्यकं स्यात् । ननु भोगोपरतः, ग्रामनिर्गतः इत्यादिषु कथं पञ्चम्यन्तस्य समासः । उच्यते–कर्तृकरणे इत्यत्र बहुलशब्दप्रयोगात् क्वचिद्विभक्त्यन्तरमपि कृदन्तेन समस्यते इत्युक्तमेव ॥ **स्तोकान्तिकेति** । अर्थशब्दः स्तोकादिषु प्रत्येकमभिसंबध्यते । स्तोकाद्यर्थाः पञ्चम्यन्ताः शब्दः पञ्चम्यन्तकृच्छ्रशब्दश्च क्तान्तेन वा समस्यन्ते, तत्पुरुषश्च समासो भवति ॥ **पञ्चम्याः स्तोकादिभ्य इति** । अलुगुत्तरपदे इति वर्तते । न लुक् अलुक्, लोपाभावः । उत्तरपदे–समासे उत्तरपदे परतः सति इत्यर्थः । अयं 'सुपो धातुप्रातिपदिकयोः' इत्यस्यापवादः। उत्तरपदे इति किम्, निष्क्रान्तः स्तोकात् निःस्तोकः अत्र उत्तरपदाभावान्नालुक् ॥ **षष्ठीति** । सुप् सुपा इति तत्पुरुषः इति विभाषा इति च वर्तते । षष्ठ्यन्तं समर्थेन सुबन्तेन वा समस्यते तत्पुरुषश्च समासो भवति इत्यर्थः ॥ **पूर्वापराधरोत्तरमिति** । पूर्वापराधरोत्तरमिति समाहारद्वन्द्वः । एकदेशः अवयवः अस्यास्तीति एकदेशी अवयवी । अधिकरणं द्रव्यं । एकाधिकरणे सति तेनावयविना एकत्वविशिष्टं द्रव्यं द्योत्यते चेत् । षष्ठीसमासापवादः–एतत्सूत्राभावे 'पूर्वं कायस्य' इत्यादिस्थलेषु 'षष्ठी' इति सूत्रेण समासे सति षष्ठ्यन्तस्य प्रथमानिर्दिष्टत्वेन उपसर्जनत्वात् पूर्वपदत्वं स्यात् इति भावः । एकदेशिना इति किम् । पूर्वं नाभेः कायस्य, अत्र नाभेः इति न अवयविषष्ठी, किं तु दिग्योगलक्षणा पञ्चमी । पूर्वश्छात्राणाम्–अत्र अवयवी बहुत्वसंख्याविशिष्टस्तेन न समासः ॥ **अर्धं नपुंसकमिति** । अर्धमिति निर्देशादेव नपुंसकत्वे प्राप्ते

नित्य क्लीबे प्राग्वत् ॥ अर्ध पिप्पल्या अर्धपिप्पली ॥ **सप्तमी शौण्डैः** । २ । १ । ४० । सप्तम्यन्त शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्ड इत्यादि । द्वितीयातृतीयेत्यादियोगविभागादन्यत्रापि द्वितीयादिविभक्तीना प्रयोगवशात्समासो ज्ञेयः ॥

**दिक्संख्ये संज्ञायाम्** । २ । १ । ५० । संज्ञायामेवेति नियमार्थं

---

पुनः नपुसकशब्दप्रयोगः नित्यनपुसकलिगार्थः । तेन 'वा पुस्यर्धोऽर्ध समेऽशके' इत्यमरात् समाशवाची अर्धशब्दोऽत्राभिप्रेतः । स प्राग्वत् – स एकत्वविशिष्टेन अवयविवाचिना शब्देन वा समस्यते तत्पुरुषश्च समासो भवति । पिप्पली – 'उषणा पिप्पली शौण्डी' इत्यमरः । पिपळी इति भाषायाम् । एकदेशिना इति किम् । अर्ध पशोर्देवदत्तस्य । अत्र देवदत्तशब्देन समासो न भवति । नपुसकमिति किम् – ग्रामार्धः नगरार्धः । अत्र 'षष्ठी' इति सूत्रेण समासः ॥ **सप्तमी शौण्डैरिति** । शौण्डैः इति बहुवचननिर्देशात् गणपाठे शौण्डादिगणदर्शनाच्च शौण्डादिभिरित्यर्थः । शौण्डः निपुणः ॥ ननु 'आसनबन्धधीरः', 'नगेन्द्रसक्ता (दृष्टि)' इत्याद्याः कतिचित् तत्पुरुषसमासा दृश्यन्ते तत्साधकानि तु सूत्राणि नोपलभ्यन्ते । कथं ते समर्थनीया इति चेदाह **द्वितीयातृतीयेति** । योगस्य सूत्रस्य विभागः योगविभागः । 'द्वितीया श्रितातीत–' इति सूत्र विभज्य 'द्वितीया' इति प्रथम सूत्रं द्रष्टव्यम्, तस्यार्थः–द्वितीयान्त समर्थेन सुबन्तेन सह वा समस्यते, तत्पुरुषश्च समासो भवति । ततः श्रितातीत–इति । द्वितीया इति वर्तते । तेन द्वितीयान्त श्रितादिप्रकृतिकैः सुबन्तैः समस्यते इत्यादि पूर्ववत् । एवं अन्यत्रापि प्रयोगवशाद्योगविभागः कर्तव्यः, इष्टसाधनत्वाच्छास्त्रस्य । अन्ये त्वाहुः । एतादृशाः प्रयोगाः 'सह सुपा' इति सूत्रेण 'कर्तृकरणे कृता बहुलम्' इति योगे बहुलग्रहणेन वा समर्थनीयाः ॥ **दिक्संख्ये इति** । समानाधिकरणेन इति वर्तते । दिक्सख्ये द्वन्द्वः । दिग्वाचकाः सख्यावाचकाश्च शब्दाः सज्ञाया समानाधिकरणेन सुबन्तेन सह समस्यन्ते । ननु 'विशेषण विशेष्येण बहुल' इत्यनेनैव एतत्सिद्धम् ॥ सत्यम् । एवं सिद्धे सति यदेतत्सूत्र प्रणीतं तज्ज्ञापयत्याचार्यः दिग्वाचकाः संख्यावाचकाश्च शब्दाः सज्ञायामेव समस्यन्ते । इषुकामशमी देशविशेषस्य नाम । सप्तर्षयः मरीच्यादीना

सूत्रम्। पूर्वेषुकामशमी। सप्तर्षयः। तेनेह न। उत्तरा वृक्षाः। पञ्च ब्राह्मणाः॥ **तद्धितार्थोत्तरपदसमाहारे च** ।२।१।५१। तद्धितार्थ-विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्सङ्ख्ये प्राग्वत्। पूर्वस्या शालाया भवः पूर्वशाल इति समासे जाते ( **सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः** )॥ **दिक्पूर्वपदादसंज्ञायां ञः** ।४।२।१०७। अस्माद्भ-वाद्यर्थे ञः स्यादसंज्ञायाम्॥ **तद्धितेष्वचामादेः** ।७।२।११७। ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात्। यस्येति च। पौर्वशालः। पंच

---

संज्ञा। ननु कथं 'तत्पूर्वभंगे वितथप्रयत्नः' इति रघौ॥ अत्र पूर्वशब्दः न दिग्वाची किंतु कालवाची। तेन संज्ञाया अभावेऽपि 'विशेषण विशेष्येण-' इति समासः॥ **तद्धितार्थोत्तरेति**। दिक्सङ्ख्ये इति समानाधिकरणे इति सुपा इति च वर्तते। तद्धितार्थे – समासात्परं तद्धितप्रत्यये कर्तव्ये इत्यर्थः। उत्तरपदे – समासान्तरस्य उत्तरपदे परतः। पूर्वस्याम् शालाया भवः इत्यर्थे तद्धितार्थविषये प्रथम पूर्वा शाला इत्येतयोः समासे कर्तव्ये पूर्वपदस्य पुंवद्भावमाह **सर्वनाम्न इति**। यत्किमपि सर्वनाम्नो लिंगं भवतु तत्परित्यज्य तद्धितसमासादिषु सर्ववृत्तिषु तदात्मनः पुंवद्रूप धारयति इत्यर्थः। एतेन पूर्वशाला इति जाते तत्र भवः इत्यर्थे तद्धितप्रत्यये कर्तव्ये आह **दिक्पूर्वपदादिति**। दिक् पूर्वपद यस्य तस्मात् समासात् 'तत्र भवः' इत्याद्यर्थेषु ञः स्यात्, न तु संज्ञायाम्। पूर्वशाला ञ इति स्थिते आह **तद्धितेष्वचामादेरिति**। ञ्णिति वृद्धिः इति वर्तते। अचामिति निर्धारणे षष्ठी। अत्र प्रत्ययस्य ञित्त्वात् ऊकारस्य वृद्धौ पौर्वशाला अ इति जाते आह – **यस्येति चेति**। भस्य इति लोपः इति तद्धिते इति च वर्तते। 'यस्य ईति च' इति पदच्छेदः। इश्च अश्च तयोः समाहारः यम्। तस्य – इवर्णस्य अवर्णस्य चेत्यर्थः। भस्य इवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे। तेन आकारलोपे विभक्तिकार्ये च पौर्वशालः इति रूपम्। उत्तरपदोदाहरणमाह – पञ्च गावः धनं

गावो धन यस्येति त्रिपदे बहुव्रीहौ **द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्** ॥ **गोरतद्धितलुकि** । ५ । ४ । ९२ । गोन्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि । पञ्चगवधनः ॥

**तत्पुरुषः समानाधिकरणः कर्मधारयः** । १ । २ । ४२ । **संख्यापूर्वो द्विगुः** । २ । १ । ५२ । तद्धितार्थेत्यत्रोक्तस्त्रिविधः संख्यापूर्वो द्विगुसंज्ञः स्यात् ॥ **द्विगुरेकवचनम्** । २ । ४ । १ । द्विग्वर्थः समाहार एकवत्स्यात् ॥ **स नपुंसकम्** ।

---

यस्य इति । **द्वन्द्वतत्पुरुषयोरिति** । उत्तरपदे परतः यौ द्वन्द्वतत्पुरुषौ तौ नित्यमेव भवतः न तु विभाषया । एवं धनशब्दे उत्तरपदे पञ्चन् गो इत्येतयोः समासे कर्तव्ये आह – **गोरतद्धितेति** । तत्पुरुषस्येति वर्तते । तच्च पञ्चम्यन्ततया विपरिणम्यते । तदन्तविधिना गोशब्दान्तात् तत्पुरुषात् इत्यर्थः । टच् इत्यपि वर्तते । अतद्धितलुकि – यदा तद्धितो लुप्यते तदा टच् न भवतीत्यर्थः । यथा पञ्चभिः गोभिः क्रीतः पञ्चगुः । 'अध्यर्धपूर्वाद् द्विगोर्लुगसज्ञायाम्' इति तद्धितलुक् । **तत्पुरुषः समानाधिकरण इति** । समानमधिकरणं द्रव्य वाच्यत्वेन ययोः ते समानाधिकरणे पदे । ते अस्य स्त इति समानाधिकरणः । 'अर्श– आदिभ्योऽच्' इति मत्वर्थीयः अच् समानाधिकरणपदकः इत्यर्थः । कर्मधारयसज्ञालाभेऽपि तत्पुरुषसज्ञा न हीयते इति ज्ञापयितुं इदं सूत्रं समासाधिकारादन्यत्र पठ्यते । अन्यथा समासाधिकारे 'आकडारादेका संज्ञा' इति एकसज्ञानियमात् कर्मधारयसज्ञाया प्राप्ताया तत्पुरुषसज्ञा न भवेत् ॥ **संख्यापूर्वो द्विगुरिति** । संख्या पूर्वः अवयवः यस्य स संख्यापूर्वः प्रत्यासत्त्या तद्धितार्थोत्तरपद – इत्यत्र विहितस्य संख्या – पूर्वपदस्य त्रिविधस्य समासस्येयं संज्ञा ॥ **द्विगुरेकवचनमिति** । अत्र 'समाहारग्रहणं च तद्धितार्थप्रतिषधार्थम्' इति वार्त्तिकात् समाहारार्थ एव द्विगुरत्र विवक्षितः । वक्ति इति वचनम् । 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्तरि ल्युट् । एकस्य वचनम् एकवचनम् । एकस्यार्थस्य वाचकः इत्यर्थः ॥ **स नपुंसकमिति** । एकवचनप्रकरणात् स इति पदेन

२।४।१७। समाहारे द्विगुर्द्वन्द्वश्च नपुंसकवत्स्यात्। पञ्चानां गवां समाहारः पञ्चगवम् ॥ **विशेषणं विशेष्येण बहुलम्**।२।१।५७। भेदकं भेद्येन समानाधिकरणेन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात्क्वचिन्नित्यम्। कृष्णसर्पः। क्वचिन्न। रामो जामदग्न्यः॥ **उपमानानि सामान्यवचनैः**।२।१।५५। घन इव श्यामो घनश्यामः। ( **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्**।) शाकप्रियः पार्थिवः शाकपार्थिवः। देवपूजको ब्राह्मणो देवब्राह्मणः॥ **नञ्**।२।२।६ नञ् सुपा सह समस्यते॥ **नलो-**

---

समाहारवाचकः द्विगुः द्वन्द्वश्च निर्दिश्येते ॥ **विशेषणं विशेष्येणेति**। विशिष्यते ऽनेनेति विशेषणम्, करणे ल्युट्। भेदकं व्यावर्तकमित्यर्थः। समानाधिकरणेन इति वर्तते। प्राग्वत् – भेदकं समानाधिकरणेन भेद्येन समस्यते तत्पुरुषश्च समासो भवति। समानाधिकरणत्वात् कर्मधारयसंज्ञा ऽपि। बहुलग्रहणं किमर्थम्। 'विभाषा' इत्यधिकारात् समासस्य वैकल्पिकत्वसिद्धिः स्यादेव इति चेत्। उच्यते बहुलपदेन नानाप्रकारा द्योत्यन्ते। क्वचित्समासो नित्यं भवति यथा कृष्णसर्पः। क्वचिन्न भवति यथा रामो जामदग्न्यः। क्वचिदुभयथा नीलमुत्पलं नीलोत्पलम् ॥ उपमानानीति। उपमीयन्ते सदृशतया परिच्छिद्यन्ते यैस्तानि उपमानानि, व्याघ्रः, कमलं इत्यादीनि। समानस्य भावः सामान्यं साधारणधर्मः, तत् उक्तवन्तः इति सामान्यवचनाः। बाहुलकात् कर्तरि ल्युट्। ये पूर्वं साधारणधर्मं उक्त्वा तद्वत् द्रव्यमभिदधति ते विशेषणशब्दाः। समानाधिकरणेन इति वर्तते। घन इव श्यामः–पूर्वपदस्य उपमानत्वं द्योतयितुं इवशब्दः विग्रहे प्रयुज्यते। समासे उपमानान्येव पूर्वं प्रयोज्यानि इति विधातुं सूत्रारंभः। अन्यथा विशेषणविशेष्यभावे कामचारात् 'विशेषणं विशेष्येण बहुलं' इति सूत्रेण समासे कृते उपमानस्य परनिपातोऽपि स्यात् ॥ **शाकपार्थिवादीनामिति** ॥ वार्त्तिकमिदम्। शाकः प्रियः यस्य स शाकप्रियः बहुव्रीहिः। अस्य पार्थिवशब्देन समानाधिकरणेन समासे कर्तव्ये उत्तरपदस्य प्रियशब्दस्य लोपः। शाकपार्थिवः। **नञिति**। समानाधिकरणे इति निवृत्तम्। नञ् सुपा सह समस्यते तत्पुरुषश्च समासो भवति। उत्तरपदार्थप्रधानत्वात् आरोपितत्वं नञा द्योत्यते अब्राह्मणः आरोपितब्राह्मणत्ववान्, ब्राह्मणभिन्न इत्यर्थः।

**पो नञः** । ६ । ३ । ७३ । नञो नस्य लोप उत्तरपदे । न ब्राह्मणः अब्राह्मणः ॥
**तस्मान्नुडचि** । ६ । ३ । ७४ । लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः ॥

**कुगतिप्रादयः** । २ । २ । १८ । एते समर्थेन नित्य समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः ॥ **ऊर्यादिच्विडाचश्च** । १ । ४ । ६१ ।

---

अन्ये तु 'तत्सादृश्यमभावश्च तदन्यत्व तदल्पता । अप्राशस्त्य विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥' इति नञर्थानाहुः । उदाहरणानि—अब्राह्मणः अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोअश्वेभ्यः, अधर्मः ॥ **नलोपो नञ इति** । नलोपः नकारस्य लोपः । सापेक्षत्वेऽपि गमकत्वात् समासः । न इति लुप्तषष्ठीकं वा पदम् । नञः इति षष्ठी । नञ् इति अव्ययमिह विवक्षितं न तु 'स्त्रीपुंसाभ्या नञ्स्नञौ भवनात्' इति सूत्रे विहितो नञ्प्रत्ययः । उत्तरपदे इति वर्तते । नञः इति ञकारेण निर्दे-शात् यत्र 'नैकधा' 'नातिशीतोष्णः' इत्यादिषु सुप्सुप्समासेषु नलोपो न भवति तत्र निरनुबन्धको नशब्दः पूर्वपद इति ज्ञेयम् ॥ **तस्मानुडिति** । तच्छब्देन लुप्तनकारो नञ् परामृश्यते । उत्तरपदे इत्यनुवृत्तं अचि इत्यनेन विशिष्यते । 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषया अजादौ उत्तरपदे इत्यर्थः पर्यवस्यति । तस्मात् इति पञ्चमी 'तस्मादित्युत्तरस्य ।' इति परिभाषया अचि इति सप्तम्याः षष्ठी प्रकल्पयति । तस्मिन् इति निर्दिष्टे पूर्वस्येति परिभाषा तु नात्र प्रवर्तते 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायात् । तेन न अश्वः इति विग्रहे नकारलोपे कृते अजाद्युत्तरपदस्य अश्वशब्दस्य नुट् । उकार उच्चारणार्थः । टित्वात् 'आद्यन्तौ टकितौ' इति योगेन नुट् आद्यवयवो भवति ॥ **कुगतिप्रादय इति** । नित्य इति वर्तते । तेन एते नित्यसमासाः । प्रादीना क्रियायोगे गतिसञ्ज्ञा भवत्येव । अस्मिन् सूत्रे तेषा पृथग्ग्रहणात् अक्रियायुक्ता अपि प्रादयः समर्थेन समस्यन्ते इति भावः । यथा सुपुरुषः । गतिसंज्ञा व्याचष्टे—**उर्यादीति** । क्रियायोगे इति वर्तते । ऊरी उररी अंगी-

ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसञ्ज्ञाः स्युः। ऊरीकृत्य शुक्लीकृत्य पटपटाकृत्य। सुपुरुषः। (**प्राद्यो गताद्यर्थे प्रथमया।**) प्रगत आचार्यः प्राचार्यः। (**अत्यादयः क्रान्ताद्यर्थे द्वितीयया**) अतिक्रान्तो मालामिति विग्रहे॥ **एकविभक्ति चापूर्वनिपाते** । १ । २ । ४४ । विग्रहे यन्नियतविभक्तिक तदु-

---

करणे विस्तारे च। च्विडाचौ कृभ्वस्तियोगे विहितौ। तत्साहचर्यादूर्यादीनामपि कृभ्वस्तिभिरेव योगे गतिसंज्ञा विधीयते। ऊरी इत्यस्य कृत्वा इत्यनेन समासे समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यबादेशः। **शुक्लीकृत्येति**–अशुक्लं शुक्लं कृत्वा इत्यर्थे 'अभूततद्भावे कृभ्वस्तियोगे सपद्यकर्तरि च्विः' इति कृत्वाशब्दयोगे शुक्लशब्दात् च्विप्रत्यये, 'अस्य च्वौ' इति अन्त्यस्याकारस्य ईकारे, 'वेरपृक्तस्य' इति च्विलोपे शुक्ली कृत्वा इत्येतयोः समासे, 'समासे ऽनञ्पूर्वे'–इत्यादिना क्त्वाप्रत्ययस्य ल्यबादेशः। **पटपटाकृत्येति**। पटत्-सदृशं शब्दं कृत्वा इत्यर्थे कृत्वाशब्दयोगे 'अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्' इति डाच्। 'डाचि विवक्षिते द्वे बहुलम्' इति वार्त्तिकेन द्वित्वे, पटत् पटत् डाच् कृत्वा इति स्थिते 'नित्यमाम्रेडिते डाचीति वक्तव्यम्' इति तकारपकारयोः पररूपे, पटपटत् डाच् कृत्वा इति जाते, डित्त्वात् टेर्लोपे, पटपटा कृत्वा इत्येतयोः समासे कर्तव्य पूर्ववत् क्त्वो ल्यबादेशः॥ प्रादीना व्यवस्थापनार्थ सौनागैः स्वव्याकरणे पठितानि भाष्ये चोद्धृतानि वार्त्तिकानि पठति–**प्राद्यो गताद्यर्थे इति**। गताद्यर्थे वर्तमानाः प्रादयः समर्थेन सुबन्तेन समस्यन्ते इत्यर्थः। अतिक्रान्तो मालामिति विग्रहे माला-शब्दस्य अन्त्याकारस्य ह्रस्व शासितुं प्रथमं तस्योपसर्जनसञ्ज्ञा विधत्ते **एकविभक्ति चेति**। एका विभक्तिर्यस्य तत् एकविभक्ति। समासे विधीयमाने यन्नियतविभक्तिकं द्वितीये स्वससृष्टार्थके बहुभिर्विभक्ति-भिर्युज्यमानेऽपि एकयैव विभक्त्या युज्यते तत् इत्यर्थः। यथा अतिक्रान्तः मालाम्, अतिक्रान्त मालाम् इत्यादिषु मालाशब्दः। अपूर्वनिपाते इति विषयसप्तमी। उपसर्जनं पूर्वमिति उपसर्जनस्य पूर्वनिपाताख्यं कार्यं वर्जयित्वा अन्यस्मिन् ह्रस्वत्वादिकार्ये। उपसर्जनमिति

पसर्जनसंज्ञ स्यान्न तु तस्य पूर्वनिपातः । **गोस्त्रियोरुपसर्जनस्य** ।१ । २ । ४८ ।
उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् ।
अतिमालः । (**अवादयः क्रुष्टाद्यर्थे तृतीयया ।**) अवक्रुष्टः कोकिलया अवकोकिलः ।
(**पर्यादयो ग्लानाद्यर्थे चतुर्थ्या ।** ) परिग्लानोऽध्ययनाय पर्यध्ययनः ।
(**निरादयः क्रान्ताद्यर्थे पञ्चम्या ।** ) निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः ॥

**तत्रोपपदं सप्तमीस्थम्** । ३ । १ । ९२ । सप्तम्यन्ते पदे कर्मणीत्यादौ
वाच्यत्वेन स्थितं कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् ॥**उपपदमतिङ्** ।२।२।१९।
उपपदं सुबन्तं समर्थेन नित्यं समस्यतेऽतिङन्तश्चायं समासः । कुम्भं करोतीति

---

वर्तते । एवं मालाशब्दस्य उपसर्जनसंज्ञायामाह – **गोस्त्रियोरिति** ।
प्रातिपदिकस्य इति ह्रस्वः इति च वर्तते । सूत्रे गोपदेन गोशब्दस्वरूपं
विवक्षितं न तु तदर्थः । स्त्री इति स्त्रीप्रत्ययः न स्त्रीशब्दस्वरूपम् ।
गोस्त्रियोः इति षष्ठीद्विवचनम् । उपसर्जनस्येति गोस्त्रियोरित्यस्य
विशेषणम् । प्रत्येकाभिप्रायमेकवचनम् । तेन उपसर्जनभूतस्य गोशब्दस्य
स्त्रीप्रत्ययान्तस्य चेत्यर्थः । प्रातिपदिकस्य इति वर्तते । तच्च गोस्त्रियो-
रित्यनेन विशेष्यते तदन्तविधिना उपसर्जनं यो गोशब्दः
इत्यादिरर्थः एवं मालाशब्दस्याकारस्य ह्रस्वत्वे अतिमालः इति रूपम् ।
अवक्रुष्टः आहूतः । परिग्लानोऽध्ययनाय – अध्ययनेन श्रान्त इत्यर्थः ॥
**तत्रोपपदमिति** । तत्र धात्वधिकारे । प्रत्यासत्त्या तृतीयधात्वधिकार
एवात्र गृह्यते । सप्तमीपदेन सप्तम्यन्तं लक्ष्यते । तस्मिन् वाच्यवाचक-
भावेन तिष्ठतीति सप्तमीस्थम्, यथा कर्मण्यण् इति सूत्रे सप्तम्यन्तस्य
'कर्मणि' इति पदस्य वाच्यत्वेन स्थितं कुम्भादि । लक्षणया तद्वाचकं
पदमित्यर्थः । स्थपदेन 'न केवलं यत्र 'सप्तम्यां जनेर्डः' इत्यादिवत्
सप्तमीशब्दः प्रयुक्तस्तत्रोपपदसंज्ञा किंतु 'यत्र किंचित्पदं सप्तम्या निर्दिष्टं
तत्रापि' इत्यर्थो द्योत्यते ॥ उपोच्चारितं पदमुपपदम् । **उपपदमतिङ् इति** ।
नित्यमिति सुप् इति च वर्तते । तेन उपपदं सुबन्तेन समर्थेन नित्यं
समस्यते इत्यर्थः । न विद्यते तिङ् यस्मिन् सोऽतिङ् । इदं 'समासः'

कुम्भकारः। अतिङ् किम्। मा भवान् भूत्। माङि लुङिति सप्तमीनिर्देशान्माङु-पपदम्। (**गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः।** व्याघ्री अश्वक्रीती कच्छपीत्यादि॥) **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः।५।**

---

इत्यधिकृतस्य पदस्य विशेषणम्। तेनाह – **अतिङन्तश्चायं समासः।** तिङन्त समासस्य उत्तरपद न भवतीत्यर्थः। माङि लुङ इति सूत्रे माङ् सप्तमीनिर्दिष्टत्वेनोपपदम्, परं तत् 'भूत्' इति तिङन्तेन न समस्यते समासाभावश्च 'भवान्' इति पदव्यवधानेन द्योत्यते। ननु 'सह सुपा' इत्यतः सुपा इत्यस्य अनुवृत्तिसभवे किमर्थ अतिङ् इत्युक्तम्। उच्यते-अतिङ् प्रयोगेण सुप् निवृत्त इति गम्यते। ततश्च 'गतिकारकोपपदाना कृद्भिः सह समा-सवचन प्राक् सुबुत्पत्तेः' इति परिभाषा ज्ञाप्यते। किमस्याः परिभाषायाः फलम्। व्याघ्री इत्यादीनि रूपाणि सिध्यन्ति। तथाहि व्याजिघ्रति इति **व्याघ्री।** 'आतश्चोपसर्गे' इति आपूर्वात् घ्राधातोः कः। 'आतो लोप इटि च' इति आकारलोपः। आघ्रः इत्युपपदसमासः। ततः वेः आघ्र इत्यनेन गतिसमासः क्रियते। स्त्रीव विवक्षाया 'जातेरस्त्रीविषयादयोपधात्' इति सूत्रेण जातिलक्षणे ङीषि सुपि च व्याघ्री इति रूपम्। समासात्पूर्व सुबुत्पत्तौ तु 'स्वार्थद्रव्यलिंग-वचनविभक्तिकार्याणि क्रमेण भवन्ति' इति सिद्धान्तात् सुबुत्पत्तेः पूर्वं लिंगयोग इति स्त्रीत्वविवक्षाया आघ्रशब्दस्य जातित्वाभावात् न ङीष् कि तु टाप् एव स्यात् ततः समासे व्याघ्रा इति रूप स्यात्। एव कारकोदाहरण **अश्वक्रीती इति।** अश्वेन क्रीता। 'कर्तृकरणे कृता बहुलम्' इति निर्विभक्तिकेन कृदन्तेन समासः। ततः 'क्रीतात्करणपूर्वात्' इति ङीप्। सुबन्तेन समासे तु केवलस्य क्रीतशब्दस्य करणपूर्वत्वाभावात् न ङीप् कि तु टाप् एव स्यात् तेन अश्वक्रीता इति रूप स्यात्। उपपदोदाहरण **कच्छपी।** कच्छेन तीरेण पिबति इति। कच्छशब्दे उपपदे पाधातोः कप्रत्यये 'आतो लोप इटि च' इत्याकारलोपे प इति रूपम्। कच्छशब्दस्य प इति निर्विभक्तिकेन कृदन्तेन समासः। ततो जातिलक्षणे ङीषि कच्छपी इति रूपम्। सुबन्तेन समासे तु कच्छपा इति रूप स्यात्। तत्पुरुषे समासान्तानाह – **तत्पुरुषस्येति।**

४ । ८६ । संख्याव्ययादेरङ्गुल्यन्तस्य समासान्तोऽच् स्यात् । द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलम् । निर्गतमङ्गुलिभ्यो निरङ्गुलम् ॥ **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः** । ५ । ४ । ८७ । एभ्यो रात्रेरच् स्याच्चात्सख्याव्ययादेः । **अहर्ग्रहणं द्वन्द्वार्थम्** ॥ **रात्राह्नाहाः पुंसि** । २ । ४ । २९ । एतदन्तौ द्वन्द्वतत्पुरुषौ पुस्येव । अहश्च रात्रिश्चाहोरात्रः । सर्वरात्रः । सख्यातरात्रः । संख्यापूर्व रात्र क्लीबम् । द्विरात्रम् । त्रिरात्रम् ॥ **राजाहःसखिभ्यष्टच्** । ५।४।९१ । एतदन्ता-

---

समासान्तः इति अच् इति च वर्तते । सख्या च अव्यय च संख्याव्यये ते आदी यस्य तस्य सख्याव्ययादेः तत्पुरुषस्य । अगुलेः इत्यपि तत्पुरुषस्य इत्यस्य विशेषणम् । तदन्तविधिना अंगुल्यन्तस्य अगुल्युत्तरपदस्येत्यर्थः । समासान्तः इत्यनुवृत्तेः अच् समासस्य अन्तावयवो भवति । तेन तत्पुरुषस्येति अवयवषष्ठी । द्वे अङ्गुली प्रमाण अस्य इति प्रमाणार्थे मात्रच्प्रत्यये विवक्षिते तद्धितार्थोत्तर-इति सूत्रेण तत्पुरुषविशेषः द्विगुसमासः । ततः प्रकृतसूत्रेण अच्प्रत्यये कृते द्व्यङ्गुलि अ इति जाते, 'यस्येति च' इति इकारलोपे, 'द्विगोर्नित्यम्' इति मात्रचो लोपे, द्व्यङ्गुल इति सिद्धम् । निर्गतमङ्गुलिभ्यः निरङ्गुलम्, प्रादिसमासः ॥ **अहःसर्वैकदेशेति** । तत्पुरुषस्य इति वर्तते । चकारेण सख्याव्ययादेरित्यनुकृष्यते । अहरादेः रात्र्यन्तस्य तत्पुरुषस्यासभवात् वार्त्तिकमुदाहरति – **अहर्ग्रहणं द्वन्द्वार्थम्** । अहोरात्र जातिरप्राणिनामित्येकवद्भावः । 'स नपुसकम्' इति सूत्रं बाधित्वा 'रात्राह्नाहाः पुंसि' इति सूत्रेण पुंस्त्वम् । सर्वा रात्रिः सर्वरात्रः । एकदेशः—पूर्व रात्रेः पूर्वरात्रः, द्वयोः रात्र्योः समाहारः द्विरात्रम् । 'रात्राह्नाहाः पुंसि' इति सूत्रं बाधित्वा 'संख्यापूर्व रात्रं क्लीबम्' इति वार्त्तिकेन क्लीबत्वम् ॥ **राजाहःसखिभ्य इति** । तत्पुरुषस्य इति वर्तते । तत् पञ्चमीबहुवचनेन विपरिणत राजाहःसखिभ्यः इत्यनेन विशेष्यते । तदन्तविधिना राजाहःसख्यन्तात् तत्पुरुषात् इत्यर्थः । परमश्चासौ राजा च परमराजः । एव उत्तमाहः, राजसखः इत्यादि । टचः चकारः स्वरार्थः । टित्त्व तु टिड्ढाणञ् इति ङीबर्थम् । तेन

त्तत्पुरुषाट्टच् स्यात् । परमराजः ॥

**आन्महतः समानाधिकरणजातीययोः** । ६ । ३ । ४६ । महत आकारोऽन्तादेशः स्यात्समानाधिकरण उत्तरपदे जातीये च परे । महाराजः । प्रकारवचने जातीयर् । महाप्रकारो महाजातीयः ॥ **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः** । ६ । ३ । ४७ । आत्स्यात् । द्वौ च दश च द्वादश । अष्टाविंशतिः ॥

**परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः** । २ । ३ । २६ । एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली । ( **द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः** । ) पञ्चसु कपालेषु संस्कृतः पञ्चकपालः

---

राजानमतिक्रान्ता स्त्री अतिराजी ॥ **आन्महतः समानाधिकरणेति** । उत्तरपदे इति वर्तते । तच्च समानाधिकरणपदेन अन्वेति न तु जातीयेन । यतो जातीयर् प्रत्ययः, न पदम् । आत् इत्यादेशे तकारः उच्चारणार्थः । अलोऽन्त्यपरिभाषया सोऽन्तादेशो भवति । महान् राजा महाराजः । राजाहः-खिभ्यष्टच् । **प्रकारवचन इति** । सामान्यस्य भेदको विशेषः प्रकारः । तस्य वचने, महाजातीयः महत्सदृशः इत्यर्थः ॥ **द्व्यष्टनः संख्यायामिति** । आत् इति वर्तते । द्व्यष्टनः इति समाहारस्य षष्ठ्येकवचनम् । द्विशब्दस्य अष्टन्शब्दस्य च आकारोऽन्तादेशः स्यात् न तु बहुव्रीहौ न वा अशीतौ उत्तरपदे इत्यर्थः । द्वौ च दश च द्वादश समाहारद्वन्द्वः । द्व्यधिका दश द्वादश शाकपार्थिवादित्वा-दुत्तरपदलोपः । अष्टौ च विंशतिश्च अष्टाविंशतिः । समाहारः । स्त्रीत्वं लोकात् । न तु इतरेतरद्वन्द्वः । तथाऽर्थानवगमात् । द्व्यष्टनः किम् । पञ्चदश । संख्यायामिति किम् । द्वैमातुरः । अबहुव्रीह्यशीत्योः किम् । द्वित्राः, द्व्यशीतिः ॥ **परवल्लिङ्गेति** । परवत् परस्य इव । तत्र तस्येव इति सूत्रेण षष्ठ्यन्ताद्वतिः । परशब्देन परपदं लक्ष्यते । द्वन्द्वपदं इतरेतरद्वंद्वपरम् । समाहारद्वन्द्वे 'स नपुंसकम्' इति परसूत्रेण क्लीबत्वमेव । कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ स्त्रीलिंगस्य मयूरीशब्दस्योत्तरपदत्वात् समासस्यापि स्त्रीत्वम् । 'मयूरीकुक्कुटौ' इत्यत्र तु उत्तरपदस्य पुंस्त्वात् समासस्यापि पुंस्त्वम् । अर्धं पिप्पल्याः अर्धपिप्पली । उत्तरपदस्य स्त्रीत्वात् समासस्यापि स्त्रीत्वम् ॥ **द्विगुप्राप्तेति** । द्विगु, प्राप्त, आपन्न, अलंपूर्व, गतिसमास एतेषु परवल्लिङ्ग – इति

पुरोडाशः । प्राप्तो जीविका प्राप्तजीविकः । अलं कुमार्यै अलंकुमारिः । अत एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥ **अर्धर्चाः पुंसि च** । २ । ४ । ३१ । अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चः अर्धर्चम् । एव ध्वजतीर्थशरीरमण्डपीयूषदेहाङ्कुशपात्रसूत्रादयः। **सामान्ये नपुंसकम्** । मृदु पचति । प्रातः कमनीयम् ॥ **इति तत्पुरुषः** ॥ ३ ॥

## अथ बहुव्रीहिः ॥ ४ ॥

**शेषो बहुव्रीहिः** । २ । २ । २३ । अधिकारोऽयं प्राग्द्वन्द्वात् ॥

---

सूत्रेण विहितस्य परवल्लिङ्गस्य प्रतिषेधो वक्तव्यः । द्विगुः—पञ्चसु कपालेषु संस्कृत इति विग्रहे ' संस्कृतं भक्षाः ' इति अणि विवक्षिते तद्धितार्थ-इति सूत्रेण पञ्चन्शब्दस्य कपालशब्देन समासः, ततः द्विगोर्लुगनपत्ये इति प्रत्ययस्य लुक् । उत्तरपदस्य नपुसकत्वात् समासस्य नपुसकत्वे प्राप्ते प्रकृतवार्त्तिकेन विशेष्यलिगता । एव प्राप्तजीविकः आपन्नजीविकः इत्यत्र उत्तरपदस्य स्त्रीत्वात् समासस्य स्त्रीत्वे प्राप्ते पूर्ववत् विशेष्यलिगता। अलं कुमार्यै अलंकुमारिः अत्र तादर्थ्यायोगात् न चतुर्थीसमासः । एतत्साधकं चान्यत्सूत्र न वर्तते । अतः अस्मिन् वार्त्तिके परवल्लिगतानिषेधेन अलंशब्दः चतुर्थ्यन्तेन समस्यते इति ज्ञाप्यते। कुमारीशब्दस्योपसर्जनत्वात् गोस्त्रियोः—इति ह्रस्वः । निर्गतः कौशाम्ब्याः निष्कौशाम्बिः गतिसमासः, पूर्ववत् ह्रस्वत्वम् ॥ **अर्धर्चाः पुंसि चेति** । चकारात् क्लीबेऽपि इति भावः । ऋचोऽर्धम् अर्धर्चः अर्धर्चम् । सूत्रे बहुवचनप्रयोगात् अर्धर्चादयः इत्यर्थः । परवल्लिग—इत्यस्यापवादः । **सामान्ये नपुंसकम्** । वार्त्तिकमिदम् । विशेष्यविशेषासन्निधाने स्त्रीत्वपुंस्त्वयोरविवक्षाया नपुंसकत्वे ' नपुंसकं लिगसर्वनाम ' इति भाष्योक्तेः । मृदु पचति – मृदु इति क्रियाविशेषणं द्वितीयान्तम् । मृदु पाकं करोति इत्यर्थः । प्रातः कमनीयम् – प्रातः इत्यस्य विशेष्यस्यालिङ्गत्वात् कमनीयं इति सामान्ये नपुंसकमिति ।

### अथ बहुव्रीहिः ।

**शेषो बहुव्रीहिरिति** । यत्र अन्यसमासो नोक्तः

**अनेकमन्यपदार्थे** । २ । २ । २४ । अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥ **सप्तमीविशेषणे बहुव्रीहौ** । २ । २ । ३५ । सप्तम्यन्तं विशेषण च बहुव्रीहौ पूर्व स्यात् । कण्ठेकालः । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥ **हलदन्तात्सप्तम्याः संज्ञायाम्** । ६ । ३ । ९ । हलन्तादन्तात्सप्तम्या अलुक् प्राप्तमुदक यं प्राप्तोदको ग्रामः ॥

---

स शेषः । द्वितीया श्रितातीत – इत्यादिसूत्रैः द्वितीयादि – विभक्तीना षण्णा निर्देशेन समासो विहितः । अतः शेषः प्रथमान्तः इत्यर्थः । प्रथमान्तं समर्थेन समस्यते बहुव्रीहिश्च समासो भवति इति भावः । ननु विशेषण विशेष्येण बहुलमित्यत्र प्रथमान्त समस्यते अतः कथ शेषः प्रथमान्तम् । उच्यते । तस्मिन् सूत्रे प्रथमा इति शब्दमुच्चार्य न समासो विहितः, अतो यासा विभक्तीना विशिष्य समास उक्तस्तदपेक्षयैव शेषत्वम् । यद्यपि 'प्रादयो गताद्यर्थे प्रथमया' इति गतिसमासे प्रथमानिर्देशः कृतस्तथापि द्वितीयादिवत् प्रथमा केनचित्समस्यते इति नोक्तमिति भावः ॥ **अनेकमन्यपदार्थ इति** । शेष. इति वर्तते तेन आह अनेकं प्रथमान्तम् । अन्यपदार्थे समस्यमानपदातिरिक्तपदार्थे इत्यर्थः । महाविभाषया वैकल्पिको ऽयं समासः **सप्तमीविशेषण इति** । पूर्व इति वर्तते । 'प्रत्ययग्रहणे तदन्ता ग्राह्याः' इति परिभाषया सप्तमीपदेन सप्तम्यन्त लक्ष्यते । कण्ठे कालः यस्य स कण्ठेकालः । 'अमूर्धमस्तकात्स्वागादकामे' मूर्धमस्तक-भिन्नात् हलन्तादन्ताच्च पूर्वपदात् या सप्तमी तस्या अलुक् कामशब्द-भिन्ने उत्तरपदे इति सूत्रेण सप्तम्या अलुक् । 'शेषो बहुव्रीहिः' इति सूत्रेण प्रथमान्तं समस्यते इत्युक्तम् । अस्मात् सूत्रादप्रथमान्तमपि क्वचित् समस्यते व्यधिकरणपदो बहुव्रीहिर्भवति इति ज्ञाप्यते । अत एव 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनेनाप्युक्तम् । यथा सच्छास्त्र-जन्मा हि विवेकलाभः । कान्तवृत्तयः प्राणाः । कान्ते प्रिये वृत्तिर्येषा ते इति विग्रहः ॥ **हलदन्तात्सप्तम्या इति** । अलुक् इति वर्तते । एतत्सूत्र कण्ठेकालः इति सप्तम्या लोपाभावं साधयितु उपन्यस्तम् । पर कण्ठशब्दस्य

ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः ।
वीरपुरुषको ग्रामः ।

(**प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः ।**) प्रपतितपर्णः प्रपर्णः ॥
(**नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः ।**) अविद्यमानपुत्रोऽपुत्रः ॥
**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** । ६ । ३ । ३४ । उक्तपुस्कादनूङ् उङोऽभावोऽस्यामिति बहुव्रीहिः । निपातनात्प-

---

स्वांगवाचित्वात् अमूर्धमस्तकात्—इति सूत्रेणैव अलुक् व्याख्येयः । त्वचिसारः, वनेचरः इत्यादिषु तु हलदन्तादिति सूत्रेणालुक् ॥ द्वितीयार्थं बहुव्रीहिमुदाहरति —प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । ऊढः रथः येन स ऊढरथोऽनड्वान्—तृतीयार्थबहुव्रीहिः । एवमग्रेऽपि द्रष्टव्यम् । **प्रादिभ्यो धातुजस्येति** —समासे प्रादिभ्यः पर यदि धातुज कृदन्त प्रथमान्त उत्तरपद भवति तस्य समासस्य अन्येन प्रथमान्तेन बहुव्रीहिसमासे तद् धातुज उत्तरपद वा लुप्यते इत्यर्थः । प्रपतितानि पर्णानि यस्य प्रपर्णः । प्रपतितपर्णो वा । अत्र पतित इति प्रथमसमासस्योत्तरपद वा लुप्यते ॥ **नञोऽस्त्यर्थानामिति** ॥ नञः परेषा विद्यमानार्थवाचिना सुबन्तानां बहुव्रीहिर्वाच्यः । तत्र च उत्तरपद-भूताना विद्यमानार्थाना वा लोपो भवति इति वाच्यम् । अविद्यमानः पुत्रः यस्य सोऽविद्यमानपुत्रः अपुत्रो वा ॥ **स्त्रियाः पुंवदिति** । उत्तरपदे इति वर्तते । भाषितपुस्कादनूङ् स्त्रियाः अपूरणीप्रियादिषु समानाधिकरणे स्त्रिया उत्तरपदे पुवत् इति अन्वयः । भाषितपुंस्कादनूङ् इति समासः स्त्रियाः इत्यस्य विशेषणम् । निपातनात् षष्ठ्या लुक् । भाषितपुंस्कादनूङः इत्यर्थः । भाषितः उक्तः पुमान् येन स भाषितपुस्कः, तुल्ये प्रवृत्तिनिमित्ते एकस्मिन्नेवार्थे यस्य पुवाचकं रूप विद्यते स इत्यर्थः । ऊङोऽभावः अनूङ् । भाषितपुस्कात् परः अनूङ् यस्य स भाषितपुस्कादनूङ् । निपातनात् भाषित-पुंस्कशब्दात्पर पञ्चम्या अलुक् । तस्य स्त्रियाः स्त्रीवाचकस्य शब्दस्य (न तु स्त्रीप्रत्ययस्य) पुंवत् पुवाचकस्येव रूपं स्यात् । कदा ?, समानाधिकरणे स्त्रिया स्त्रीलिंगे उत्तरपदे परतः सति, न तु पूरण्या प्रियादौ च परतः इत्यर्थः ॥

श्चम्या अलुक् षष्ठयाश्च लुक्। तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुस्कं तस्मात्पर ऊङो-ऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुवाचकस्येव रूपं स्यात् समाना-धिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्या प्रियादौ च परतः। गोस्त्रियोरिति ह्रस्वः। चित्रगुः। रूपवद्भार्यः। अनूङ किम्। वामोरूभार्यः।

**अप्पूरणीप्रमाण्योः** । ५ । ४ । ११६ । पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्ग तद-न्तात्प्रमाण्यन्ताच्च बहुव्रीहेरप्स्यात्। कल्याणी पञ्चमी यासा रात्रीणा ताः कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। अप्रियादिषु किम्। कल्याणीप्रिय इत्यादि॥ **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्।**

---

संकलितमर्थं निर्दिशति–**तुल्ये प्रवृत्तिनिमित्त इति।** चित्रा गावो यस्य इति विग्रहे चित्राशब्दस्य भाषितपुस्कत्वात् स्त्रीलिगे समानाधिकरणे गोशब्दे परतः पुंवद्भावः। तेन चित्र गो इति जाते 'गोस्त्रियोरुपसर्जनस्य' इति गोशब्दस्य ह्रस्वत्वे 'एच इग्घ्रस्वादेशे' इति ओकारस्य उकारे चित्रगुरिति रूपम्। रूपवती भार्या यस्य स रूपवद्भार्यः। अनूङ् किम्। वामोरूः भार्या यस्य स वामोरूभार्यः। वामौ सुदरौ ऊरू यस्याः सा वामोरूः, स्त्रिया वामोरुशब्दात् 'सहितशफलक्षणवामादेश्च' इति सूत्रेण ऊङ्। अत्र ऊङो भावात् पुंवद्रूपं न भवति। भाषितपुंस्कात् इति किम् गंगाभार्यः। समानाधिरकणे किम् कल्याण्याः माता कल्याणीमाता। स्त्रिया किम्? कल्याणी प्रधान यस्य स कल्याणीप्रधानः। अपूरणी–इति पुवत्वप्रतिषेधं उदाहर्तु प्रथमं पूरण्युत्तर-पदाद्बहुव्रीहेः समासान्तप्रत्ययमाह **अप्पूरणीति।** बहुव्रीहौ इति वर्तते पञ्चम्यन्तनया च विपरिणम्यते। तत् पूरणीप्रमाण्योः इत्यनेन च विशेष्यते। तदन्तविधिः। पूरणी इति स्त्रीलिगनिर्देशात् पूरणार्थप्रत्ययान्त स्त्रीलिंगमिह गृह्यते। पूर्यतेऽनया इति पूरणी द्वितीया तृतीया इत्यादि क्रमत्वबोधिका संख्या। कल्याणी पञ्चमी यासा इति कल्याणी पञ्चमी अ इति स्थिते 'यस्येति' च इतीकारलोपः॥ **बहुव्रीहौ सक्थ्यक्ष्णोरिति।** बहुव्रीहौ इति सप्तमी पञ्चम्यर्थे। सक्थ्यक्ष्णोरिति षष्ठी अपि पञ्चम्यर्थे। स्वागात् इति सक्थ्यक्ष्णोरित्यस्य विशेषणम्। सक्थ्यक्ष्णोः इति बहुव्रीहेर्विशेषणम्।

।५।४।११३। स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात्। दीर्घसक्थः। जलजाक्षी स्वाङ्गात्किम्। दीर्घसक्थि शकटम्। स्थूलाक्षा वेणुयष्टिः। अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच् ॥ **द्वित्रिभ्यां ष मूर्ध्नः** ।५।४।११५। आभ्या मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः ॥ **अन्तर्बहिर्भ्यां च लोम्नः**।५।४।११७। आभ्या लोम्नोऽप्स्याद्बहुव्रीहौ। अन्तर्लोमः। बहिर्लोमः॥ **पादस्य लोपो ऽहस्त्यादिभ्यः**।५।४।१३८। हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ। व्याघ्रस्येव पादावस्य व्याघ्रपात्। अहस्त्यादिभ्यः किम्।

---

तदन्तविधिना स्वाङ्गवाचिसक्थ्यक्ष्यन्तादित्यर्थः । दीर्घे सक्थिनी यस्य स· दीर्घ सक्थि अ इति स्थिते यस्येति चेति इकारलोपः। षच्प्रत्यये चकारः स्वरार्थः। षित्त्व तु स्त्रिया षिद्गौरादिभ्यश्चेति सूत्रेण ङीष्प्रत्ययार्थम् । तेन जलजे इवाक्षिणी यस्याः सा जलजाक्षी। दीर्घसक्थि शकटम्। दीर्घे सक्थिनी सक्थिसदृशौ ईषादण्डौ यस्य तत्। अत्र सक्थिशब्दस्य स्वागवाचित्वाभावात् न षच् । स्थूलाक्षा – स्थूलानि अक्षीणि पर्वाकुराणि यस्याः सा वेणुयष्टिः। **अक्ष्णो ऽ दर्शनादिति**। दृश्यते ऽ नेन इति दर्शनं चक्षुः। अचक्षुर्वाचिनः अक्ष्णः अच् स्यात् समासान्तः। स्थूल अक्षि अ इति स्थिते, 'यस्येति च' इति इकारलोपे, स्थूलाक्ष इति च जाते स्त्रिया 'अजाद्यतष्टाप्' इति टाप्॥ **द्वित्रिभ्यामिति** । बहुव्रीहौ इति वर्तते । ष इति लुप्तप्रथमाक पदम्। द्वौ मूर्धानौ यस्य स द्विमूर्धः, द्विमूर्धन् ष इति स्थिते 'नस्तद्धिते' इति मूर्धन्शब्दस्य टेर्लोपे द्विमूर्धः इति रूपम्। कथ "त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः।" १ समासान्तविधेरनित्यत्वान्न षप्रत्ययः।॥ **अन्तर्बहिर्भ्यामिति**। बहुव्रीहौ इत्यनुवर्तते । बहुव्रीहौ अन्तर्बहिर्भ्यां परस्य लोम्नः अप् स्यात्। अन्तर्लोमानि यस्य सोऽन्तर्लोमः । पूर्ववत् 'नस्तद्धिते' इति टिलोपः॥ **पादस्य लोप इति**। बहुव्रीहौ इति उपमानात् इति च वर्तते अहस्त्यादिभ्य· इत्यनेन च विशेष्यते। पादः अत्र उपमेयम्। **पादशब्दस्य लोप इति**। अलोऽन्त्यपरिभाषया अन्त्यस्य अकारस्य लोपो भवति। प्रकरणात् लोपोऽयं समासान्तः। हस्तिपादः – हस्तिशब्दस्य पूर्वपदत्वात् पादशब्दस्य

इति सः । व्यूढोरस्कः । प्रियसर्पिष्कः ॥ **निष्ठा** । २ । २ । ३६ । निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । युक्तयोगः ॥ **शेषाद्विभाषा** । ५ । ४ । १५४ । अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । महायशस्कः, महायशाः ॥ **इति बहुव्रीहिः** ॥ ४ ॥

## अथ द्वन्द्वसमासः ॥ ५ ॥

**चार्थे द्वन्द्वः** । २ । २ । २९ । अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते

---

'सोऽपदादौ' 'इणः षः' इति सूत्रे एवात्रोदाहरणीये । उरःप्रभृतिगणे पुमान् अनड्वान् पयो नौर्लक्ष्मीः इत्येकवचनान्तानि पठ्यन्ते न प्रातिपदिकानि । तेन द्विवचनबहुवचनान्तेभ्यः 'शेषाद्विभाषा' इति विकल्पेन कप् ॥ **निष्ठेति ।** बहुव्रीहौ इति पूर्वमिति च वर्तते । प्रत्ययग्रहणपरिभाषया निष्ठान्तमित्यर्थः । युजिर् योगे इति धातोः क्तप्रत्यये युक्तः इति रूपम् । युक्तः योगः येन स युक्तयोगः । ननु निष्ठान्त विशेषण, तस्य च 'सप्तमीविशेषणे बहुव्रीहौ' इति सूत्रेण पूर्वनिपातः स्यादेव । किमर्थमिद सूत्रम् ? उच्यते— 'विशेषणविशेष्यभावे कामचारः' इति न्यायेन क्वचित् निष्ठान्तस्य विशेष्यत्वेऽपि पूर्वनिपातो भवति इति प्रकृतं सूत्र क्रियते । इद सूत्र 'सप्तमी विशेषणे—' इत्यस्यानन्तरमेव पठितु युक्तम् । **शेषाद्विभाषा इति** । शेषशब्दोऽत्र द्व्यर्थः । उक्तादन्यः शेषः अनुक्तसमासान्तः । इतः पूर्वं येभ्यः समासान्तप्रत्यया विहितास्ततोऽन्यः शेषः । शेषात् शेषाधिकारस्थात् 'शेषा बहुव्रीहिः' इति सूत्रेण विहितात् इत्यप्यर्थः । महत् यशः यस्य स महायशा महायशस्को वा । अनुक्तसमासान्तात् इति किम् । व्याघ्रपात् पादस्य लोपः—इति अकारलोपोऽत्र विहितः तेन न कप् । शेषाधिकारस्थात् इति किम् ? पुत्रेण सह सपुत्रः इत्यत्र 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिसमासो विशेषविहितः । नाय शेषाधिकारस्थः । तेन अन्यसमासान्तप्रत्ययेऽनुक्तेऽपि नात्र कप् भवति ।

### द्वन्द्वसमासः ।

**चार्थे द्वन्द्वः** । सुप् इति अनेकमिति च वर्तते । समासः इति विभाषा

स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्रेश्वर गुरु च भजस्वेति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । भिक्षामट गा चानयेत्यनंतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न । धवखदिरौ छिन्द्धीति । मिलितानामन्वय इतरेतरयोगः । संज्ञापरिभाषम् । समूहः समाहारः ॥ **राजदन्तादिषु परम्** । २ । २ । ३१ । एषु पूर्वप्रयोगार्हं पर स्यात् । दन्ताना राजा राजदन्तः । धर्मादिष्वनियमः ।

---

इति च अविकारसूत्रे । तेन आह-अनेकं सुबन्त इत्यादि । [illegible] यथा प्रकृतवाक्ये ईश्वरभजन न गुरुभजनापेक्षम् । तेन समुच्चयोऽत्र चार्थः । ईश्वरपदस्य गुरुपदस्य च चशब्देन एकस्या भजनक्रियाया क्रमेणान्वयः, ईश्वर भजस्व गुरुं च भजस्वेत्यर्थः । **अन्यतरस्यानुषङ्गिकत्वेनेति** । अनुषंगादागतः आनुषंगिक, तस्य भाव. आनुषंगिकत्वं परार्थप्रवृत्तिविषयत्वम् । यथा भिक्षामट गा चानय इत्यत्र भिक्षार्थमटन प्रधानम्, गवानयनं तु आनुषंगिकम् । भिक्षाटने गौर्दृष्टा चेत्तामानयेत्यर्थः । एतयोरर्थयोः द्वयोः पदयोः परस्परान्वयाभावात् न समासः । इतरेतरयोगमुदाहरति—**धवखदिरौ छिन्द्धि** । धव च खदिर च छिन्द्धि । अत्र चकारद्वयप्रयोगात् पदयोः परस्परापेक्षा द्योत्यते । परस्परसाहचर्येण तयोः छिदिक्रिययाऽन्वयः तेनात्र परस्परसाहित्यसत्त्वात् समर्थत्वेन समासः । समाहारार्थमुदाहरति—**संज्ञापरिभाषम्** । सज्ञा च परिभाषा च तयोः समाहारः सज्ञापरिभाषम् । समाहारस्यैकत्वादेकवचनम् । 'स नपुसकम्' इति नपुंसकत्वम् । इतरेतरयोगे मिलितानामपि अवयवाना पृथक्त्वेन ग्रहणं भवति, समाहारे तु समूहस्य एकत्वेनैव इति तयोर्भेदः ॥ **राजदन्तादिष्विति** । उपसर्जनं पूर्वमिति वर्तते । तेन एतेषु उपसर्जनं पर स्यात् यच्च पूर्व पूर्वप्रयोगार्हं तदपि परं स्यात् । तस्मात् अय न केवलं 'उपसर्जनं पूर्वम्' इत्यस्यापवाद किन्त्वन्यस्यापि यथालक्षण विहितस्य पूर्वनिपातस्येति भावः । इदं सूत्र द्वन्द्वतत्पुरुषविषयकमिह धर्मार्थौ इत्यभिप्रायेणोपन्यस्तम् । दन्ताना राजा राजदन्तः । षष्ठ्यन्तस्योपसर्जनत्वेन पूर्वनिपाते प्राप्ते प्रकृतसूत्रेण परनिपातो विधीयते ॥ **धर्मादिष्वनियम इति** । वार्त्तिकमिदम् । पूर्वनिपातस्य अनियम अन्यतरस्य पूर्वनिपातो

अर्थधर्मौ धर्मार्थावित्यादि ॥ **द्वन्द्वे घि** । २ । २ । ३२ । द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ ॥ **अजाद्यदन्तम्** । २ । २ । ३३ । इदं द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ॥ **अल्पाच्तरम्** । २ । २ । ३४ । शिवकेशवौ ॥ **पिता मात्रा** । १ । २ । ७० । मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता पितरौ मातापितरौ वा ॥ **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** । २ । ४ । २ । एषां द्वन्द्व एकवत् । पाणिपादम् ।

---

भवति इत्यर्थः । धर्मश्च अर्थश्च इति विग्रहे अर्थशब्दस्य अजाद्यदन्तत्वात् पूर्वनिपाते प्राप्तेऽनेन तस्य पाक्षिकत्वं विधीयते ॥ **द्वन्द्वे इति** । पूर्वः इति वर्तते । 'शेषो घ्यसखि' इति सूत्रेण ह्रस्वेवर्णोवर्णान्ताना घिसंज्ञा । हरिश्च हरश्च इति विग्रहे हरिशब्दस्य घिसज्ञत्वात् पूर्वनिपातः ॥ **अजाद्यदन्तमिति** । अच् स्वरः आदिर्यस्य तत् अजादि । अत् अन्ते यस्य तददन्तम् । अजादि च तत् अदन्तं च अजाद्यदन्तम् । यत् स्वरादि ह्रस्वाकारान्तं च तत् द्वन्द्वे पूर्वं प्रयोज्यमित्यर्थः । ईशश्च कृष्णश्च ईशकृष्णौ । **घ्यन्तादजाद्यदन्तं विप्रतिषेधेन ।** ( वा० ) घ्यन्तात् घ्यन्तं बाधित्वा । ल्यब्लोपे पञ्चमी । एतयोर्द्वयोः सूत्रयोर्विरोधे अजाद्यदन्त सूत्र परत्वात् विप्रतिषेधे पर कार्यमिति न्यायेन प्रवर्तते इति भावः । इन्द्रश्च अग्निश्च इति विग्रहे अग्निशब्दस्य घिसज्ञत्वेऽपि इन्द्रशब्दस्य अजाद्यदन्तत्वात् पूर्वनिपाते इन्द्राग्नी ॥ **अल्पाच्तरमिति** । अल्पः अच् यस्मिन् तत् अल्पाच् । अल्पाच्शब्देनैव द्वितीयपदापेक्षया अल्पाच्त्वे प्राप्ते स्वार्थे तरप् । निपातनात् कुत्वं श्चुत्वं च न भवत । द्वन्द्वे अल्पसख्यस्वर पद पूर्वं प्रयोज्यमित्यर्थः । शिवश्च केशवश्च इति विग्रहे शिवशब्दस्य अल्पाच्त्वात् पूर्वनिपातः ॥ **पिता मात्रेति** । इदं एकशेषप्रकरणस्थ सूत्रम् । एकशेषसूत्राणि समासप्रकरणे न पठ्यन्ते । तेन एकशेषस्य न समाससज्ञा । भिन्नैवेयं वृत्तिः, तेन न समासान्तप्रत्ययाः । एकशेष इत्यन्यतरस्यामिति चानुवर्तते तेन आह – मात्रा सहोक्तौ इत्यादि । **द्वन्द्वश्च प्राणितूर्य – इति** । एकवचनमिति वर्तते । एकं वक्तीति । कर्तरि ल्युट् सामान्ये नपुंसकम् । 'द्विगुरेकवचनम्' इति पूर्वसूत्रे पठितस्य 'समाहार-

मार्दङ्गिकवैणविकम् । रथिकाश्वारोहम् ॥

**द्वन्द्वाच्चुदषहान्तात्समाहारे** ५।४।१०६ । चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृषदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम् । प्रावृट्शरदौ ॥ **इति द्वन्द्वसमासः** ॥५॥

## अथ समासान्ताः ॥ ६ ॥

**ऋक्पूरब्धूःपथामानक्षे** । ५ । ४ । ७४ । अ अनक्ष इति छेदः । ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवः । अक्षे या धूस्तदन्तस्य तु न । अर्धर्चः । विष्णुपुरम् । विमलाप सरः । राजधुरा । अक्षे तु अक्षधूः ।

---

ग्रहण कर्तव्यम्' इति वार्त्तिकस्य अत्राप्यनुवृत्तेः द्वन्द्वपदेन समाहारद्वन्द्वो लक्ष्यते । प्राणी च तूर्यं च सेना च प्राणितूर्यसेनाः तासामङ्गानि प्राणितूर्यसेनाङ्गानि तेषाम् । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति न्यायेन प्राण्यङ्गाना तूर्याङ्गाना सेनाङ्गानाम् इत्यर्थः । प्राणिसेनयोः पक्षे अङ्गं अवयवार्थकम्, तूर्यपक्षे तु उपकारकार्थं बोध्यम् । पाण्योश्च पादयोश्च समाहारः पाणिपादम् । मृदंगवादन शिल्पमेषामित्यर्थे मृदंगशब्दात् ठक् मार्दंगिकाः । एवं वैणविका अपि । मार्दंगिकवैणविकाना समाहार मार्दंगिकवैणविकम् । रथेन चरन्ति इति रथिकाः । ष्ठन् । रथिकाना अश्वारोहाणा च समाहारः रथिकाश्वारोहम् ॥

**द्वन्द्वाच्चुदेति** । टच् इति वर्तते । समासान्तः इति अधिक्रियते । चुदषहाः अन्ते यस्य तस्मात् द्वन्द्वात् । वाक् च त्वक् च वाक्त्वचम् । समुच्चयश्चार्थः । **ऋक्पूरब्धूरिति** । बहुव्रीहौ इति नानुवर्तते । समाससामान्येन विधानम् । समासान्त इति वर्तते । तत्र समासस्य इति पदस्य ऋक्पूरब्धूपथामिति षष्ठयन्तं विशेषणम् तदन्तविधिना – ऋगाद्यन्तस्य समासस्य 'अ' प्रत्ययो ऽन्तः अन्तावयवो भवति । अनक्ष न तु अक्षे अक्षसबन्धे । अनक्षे इति सामान्यतः श्रुतमपि धूःशब्देनैव सबध्यते नान्यैः, असम्भवात् । तेन आह **अक्षे या धूरिति** । अर्धं ऋचः अर्धर्चः, अर्धर्चम् । 'अर्धर्चाः पुंसि च' । विष्णोः पूः विष्णुपुरम् । परवल्लिंगतानियमं बाधित्वा लोकव्यवहारात् क्लीबत्वं भवति । यद्यपि पुरशब्देन समासेऽप्येतत्सिध्यति तथापि विष्णुपूरित्यनिष्टवारणाय सूत्रे पूर्ग्रहणमिति

दृढधूरक्षः । सखिपथः । रम्यपथो देशः ॥ **अक्ष्णोऽदर्शनात्** । ५ । ४ । ७६ । अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः । गवामक्षीव गवाक्षः ॥ **उपसर्गादध्वनः** । ५ । ४ । ८५ । प्रगतोऽध्वानं प्राध्वो रथः ॥ **न पूजनात्** । ५४ । ६९ । पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा अतिराजा ॥ **इति समासान्ताः** ॥ ६ ॥

---

तत्त्वबोधिन्याम् । विमलाः आपः यस्मिन् तत् विमलाप सरः । राज्ञः धूः राजधुरा स्त्रीत्वे टाप् । अक्षस्य रथावयवस्य धूः अक्षधूः । अनक्षे इति पदं 'न तु अक्षशब्दे पूर्वपदे' इति न व्याख्येयमिति दर्शयति दृढधूरक्षः । अत्रापि धूःशब्दस्य अक्षसंबधित्वात् न अप्रत्ययः । सख्युः पन्थाः सखिपथः । 'नस्तद्धिते' इति टिलोपः । रम्याः पन्थानो यस्मिन् स रम्यपथः । **अक्ष्णोऽदर्शनादिति** । व्याख्यातपूर्वमेतत् ॥ **उपसर्गादध्वन इति** । अच् वर्तते । उपसर्गात् परो य अध्वशब्दः तस्मात् अच् स्यात्समासे ॥ **न पूजनादिति** । समासान्ताः इत्यधिकृतम् । परेभ्यः इत्यध्याहार्यम् । यान् शब्दान् उद्दिश्य समासान्ता विहितास्ते शब्दा यदा पूजनात् पूजनार्थाच्छब्दात्परे भवन्ति तदा समासान्तप्रत्ययो न भवतीत्यर्थः । शोभनो राजा सुराजा, पूज्यो राजा अतिराजा । उभयत्रापि 'राजाहःसखिभ्यष्टच्' इति सूत्रेण विहितष्टच् न भवतीत्यर्थः । राजानमतिक्रान्ता इति विग्रहे तु पूजनार्थत्वाभावात् अतिराजः इत्येव रूपम् ।

**इति मिराश्युपाह्वेन विष्णुसूनुना वासुदेवेन कृताया**
**बालबोधिन्याख्याया लघुकौमुदीव्याख्यायाः**
**प्रथमो भागः समाप्तः ।**

---

# NOTES



नत्वा०—" having bowed to Goddess Sarasvatī I compose this short Siddhānta Kaumudī which is free from defects and contains ( many ) merits, as an introduction to the study of the Pāninian system ( of Sanskrit Grammar ) " पाणिनिना प्रोक्त पाणिनीयम् तस्मिन् प्रवेशाय । कौमुदी इव कौमुदी ( प्रकाशिका ) । सिद्धान्ताना कौमुदी सिद्धान्त-कौमुदी । लघ्वी चासौ सिद्धान्तकौमुदी च लघुसिद्धान्तकौमुदी । The work is so called because just as moonlight dispels darkness and delights all people oppressed by the heat of the sun, so the present work will remove ignorance about the settled conclusions of gram marians and please all students of grammar who feel bewildered in reading the higher works of Patañjali and others

P 2 संज्ञा—a technical term used in the system of Pāni-ni माहेश्वराणि सूत्राणि—These fourteen sūtras are believed to have been revealed by Śiva by the sound of his tabor at the end of his Tāndava dance See the verse quoted in the com For the importance of these sūtras, see the following glowing tribute paid by Patañjali —सोऽयमक्षरसमाम्नायो वाक्समाम्नाय पुष्पित फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो वेदराशि । अणादिसञ्ज्ञार्थानि—" intended for forming the technical terms ( also called प्रत्याहारs ) such as अण् &c." अण्, as we shall learn later, is an abbreviation for अ, इ and उ. Such प्रत्याहारs are used in the sūtras of Pāṇini ( e g अणुदित् सवर्णस्य चाप्रत्यय । ) They could not have been formed in the absence of these Māheśvara sūtras which have divided the whole Sanskrit alphabet into fourteen parts with an indicatory letter affixed to each. Note that ह् is included twice in these sūtras as it is re-quired in two प्रत्याहारs अट् and शल् used in अट्कुप्वाङ्नुम्व्यवायेऽपि । and शल् इगुपधादनिट· क्स । to explain the forms अर्हेण and अधुक्षत्

respectively Cf. ह्कारो द्विरुपात्तोऽयमटि शल्यपि वाञ्छता । अर्हणाधुक्षदित्येतद्द्वय सिद्ध भविष्यति ॥ एषामन्त्याः &c —" The consonants at the end of these sūtras are called इत् ( indicatory ). इत् ( इ + क्विप् ) means what disappears after serving its purpose. हकारादिष्वकार – The consonants are enumerated from the fifth sūtra onwards They are shown in the sūtras with the vowel अ added to them for pronunciation The अ in ल in the sixth sūtra is, however, indicatory This enables Pānini to form the प्रत्याहार 'र' ( with the letter र् in हयवरट् and अ in लण् ) representing र् and ल् This प्रत्याहार is used in उरण् रपर etc हलन्त्यम्– " The final consonant in the first enunciations of the teachers of grammar ( e. g. शकर, पाणिनि ) should be regarded as इत्." See com for the meaning of उपदेश Cf also उपदिश्यतेऽनेनेति उपदेश शास्त्रवाक्यानि सूत्रपाठ खिलपाठश्च। Kāśikā on 1, 3, 2; also महाभाष्य–उपदेश इति घञय करणसाधन· or उपदेशनम् उपदेश । भावे घञ् । उपदेश means an elementary term laid down by the ancient grammarians in सूत्र, वार्त्तिक, धातु, गण, उणादि, लिंगानुशासन, आगम, प्रत्यय and आदेश Cf. धातुसूत्रगणोणादिवाक्यलिंगानुशासनम् । आगमप्रत्ययादेशा उपदेशा· प्रकीर्तिता ॥ Also cf धातुप्रातिपदिकनिपातप्रत्याहारसूत्रप्रत्ययादेशागमानामन्त्यम् । महाभाष्य on I, 3.

Why is the word उपदेशे necessary in the explanation of the sūtra ? *Ans.* — Because otherwise the final consonant of even such words as अग्निचित्, सोमसुत् &c. which are current in the language would get इत्सञ्ज्ञा and then would be elided सूत्रेष्वदृष्टं° —'A word which is not used in the sūtra ( but is necessary for construing it properly, e g. उपदेशे and इत् in the sūtra हलन्त्यम् ), should in all cases be supplied from other sūtras' This process is called अनुवृत्ति The student is advised to refer to the अष्टाध्यायी frequently to see the अनुवृत्ति

P 3. अदर्शन लोपः— " The disappearance of what presents itself by some rule is called elision ( लोप ) " This is a संज्ञासूत्र. For the different kinds of sūtras cf संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विध सूत्रलक्षणम् । तस्य लोप — तस्य refers to इत् "An indicatory ( इत् ) letter disappears ( after serving its purpose )"

This is a विधिसूत्र **णादयः** etc — " The ण् and other consonants at the end of the माहेश्वरसूत्रs are added to make the formation of अण् and other प्रत्याहारs possible " **आदिरन्त्येन** etc. — ' An initial letter together with a final indicatory letter ( e. g in the माहेश्वरसूत्रs ) designates itself and ( all ) the intervening letters " Thus अण् formed with अ and ण्, the indicatory letter of for the first माहेश्वरसूत्र, denote itself ( अ ) and the intervening इ and उ. Similarly अक् stands for अ, इ, उ, ऋ and ऌ, अच् for vowels, हल् for consonants and अल् for all the letters of the alphabet The intervening indicatory letters are to be excluded in interpreting such abbreviated expressions which are called प्रत्याहारs **ऊकालोच्** &c – " A vowel whose pronunciation requires the same time as ( short ) उ, ( long ) ऊ, or ( prolated ) ऊ३ is called short, long or prolated respectively " उ is taken from the note of a cock When a cock crows early in the morning, it makes these three sounds successively For the time measure of the notes of different birds cf. चाषस्तु वदते मात्रा द्विमात्र त्वेव वायस । शिखी रौति त्रिमात्र तु नकुलस्त्वर्ध-मात्रकम् । ( शिक्षा ) For the measure of ह्रस्व, दीर्घ and प्लुत cf एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जन चार्धमात्रकम् ॥ मात्रा represents the time required for a twinkling of the eye. ( Cf. अक्षि-स्पदनप्रमाण कालो मात्रा । )

P 4 **उच्चैरुदात्त** etc — " The vowel which is produced in the higher part of a particular vocal organ is called उदात्त ( lit raised, acute ), that produced in the lower part of it is called अनुदात्त ( not raised, grave ), while that formed by a combination of the two is called स्वरित ( lit sounded, circumflex ) " **अनुनासिक** – nasalised **मुखनासिकावचनः** &c – " The letter which is pronounced with the nose and the mouth is called अनुनासिक ( nasal ) " **अइउऋवर्णानां** &c – Thus अ is first ह्रस्व, दीर्घ and प्लुत. Each of these is again उदात्त, अनुदात्त and स्वरित So we get 9 अकारs Each of these is moreover अनुनासिक and अननुनासिक, So अ has 18 forms ऌ has 12 only as it has no दीर्घ form. **एचामपि** &c – ए, ऐ, ओ and औ have no ह्रस्व form Hence they have only 12 forms in all **तुल्यास्यप्रयत्नं** &c – " The letters which are pronounced by the same vocal

organ and with the same internal effort are called homogeneous ( or similar ) " प्रयत्न –प्रकृष्ट यत्न. i.e. आभ्यन्तरयत्न . आस्ये भव आस्यम् । आस्य + यत् by शरीरावयवाद्यत् । The final य of आस्य is elided by यस्येति च and हलो यमा यमि लोप· । So the resulting form is आस्य

P. 5 ऋलृवर्णयोः etc – This is a वार्त्तिक The words वाच्यम्, उपसंख्यानम् &c are characteristic of वार्त्तिकs " ऋ and लृ should be regarded as homogeneous " ऋकार is produced in the मूर्धस्थान and लृकार in the दन्तस्थान. They would not have become homogeneous by the sūtra तुल्यास्यप्रयत्न &c. Hence the need of this वार्त्तिक This वार्त्तिक makes the rules about ऋ applicable in the case of लृ also, see e.g उरण् रपर । See also com. अकुहविसर्जनीयानां°– कु stands for the letters of कवर्ग, i e , क्, ख्, ग्, घ् and ङ् " The letters अ, क्, ख्, ग्, घ्, ङ, ह् and विसर्ग have the throat as their organ of pronunciation " उपध्मानीय is the term applied to the अर्ध विसर्ग when it precedes प् and फ् ञमङणनानां°–" ञ्, म्, ङ्, ण् and न् have the nose also ( i e. in addition to the organ which each of them has in common with the other members of its class ), as the organ of pronunciation. " जिह्वामूलीय ( lit –what is produced at the root of the tongue )—a term applied to the अर्ध विसर्ग before क् and ख् यत्नो द्विधा–" Effort is of two kinds– internal and external " For this difference cf. पदमजरी–आभ्यन्तरत्व स्थानकरणव्यापारेणोत्पत्तिकाले एव भावात् । स्थान ताल्वादि । करण जिह्वाया अग्रोपाग्रमध्यमूलानि ।. ....बाह्यत्व पुन वर्णनिष्पत्तिकालादूर्ध्वं वायुवशेनोत्पत्ते । The internal effort is of five kinds–स्पृष्ट, ईषत्स्पृष्ट, ईषद्विवृत, विवृत and संवृत The effort for स्पर्श letters or mutes ( i e , all the letters of कवर्ग, चवर्ग, टवर्ग, तवर्ग and पवर्ग ) is called स्पृष्ट ( because in their case the tongue completely touches the several organs of pronunciation in the case of the first four classes, while the two lips touch each other in the case of पवर्ग. ) See the passage from तत्त्वबोधिनी quoted in the com.

P. 6. The effort for अन्त स्थ letters or semi–vowels is ईषत्स्पृष्ट ( for the tongue slightly touches the organs ), that for ऊष्मन्

letters or sibilants श्, ष्, स् and ह्, is ईषद्विवृत ( as the tongue remains a little apart from the organs ), that for vowels is विवृत ( as the tongue keeps away from the organs ). ह्रस्वस्यावर्णस्य° " Short अ has संवृतप्रयत्न when it is actually used in speech, for the tongue keeps close to the organ of utterance without touching it, but in considering grammatical operations applicable to it, it is regarded as विवृत " If it is not so regarded, we would not get the required sandhi in such cases as दण्ड + आहरणम् । as the sūtra अक सवर्णे दीर्घ । would be inapplicable, the विवृत आ not being homogeneous to the संवृत अ. The संवृतत्व of short अ, while it is taking part in grammatical operations, is indicated by Pāṇini in the last sūtra of the Ashtādhyāyī (अ अ इति । ) which means— ' The विवृत अकार becomes संवृत ' This sūtra occurs under the अधिकार ' पूर्वत्रासिद्धम् । ' which makes it non-existent ( असिद्ध ) for the purpose of the application of rules in the whole अष्टाध्यायी For more explanation of पूर्वत्रासिद्धम् । see under that sūtra बाह्यप्रयत्नस्त्वेकादशधा—External effort is of eleven kinds—विवार expansion of the glottis ( विवारयति विकासयति कण्ठम् ), संवार—contraction of the glottis, श्वास hissing, breath, नाद—sounding, resonance; [ these two follow the pronunciation of certain letters ], घोष—low preparatory murmur [ Ballantyne ], अघोष—absence of such murmur अल्पप्राण—short breath, slight aspiration. महाप्राण—great breath, strong aspiration उदात्त, अनुदात्त and स्वरित have been explained above. These efforts are called external, because they are produced outside the mouth ( आस्य ), which is defined as ओष्ठात्प्रभृति प्राक्काकलकात् । महाभाष्य on P 1, 1, 8, ( the part which stretches from Adam's apple to the lips ) The बाह्यप्रयत्नs, though not useful in determining the homogeneity of letters, will be used in determining the nearest substitute See explanation of झयो होऽन्यतरस्याम् । below. Cf. सि. कौ. on पूर्वत्रासिद्धम् ।

P. 7 खर —ख्, फ्, छ्, ठ्, थ्, च्, ट्, त्, क्, प्, श्, ष्, and स् i. e. surds वर्गाणां प्रथमतृतीयपञ्चमाः—The first, third and fifth letters of the five classes ( कवर्ग &c ). यण्—the semivowels य्, व्, र् and ल्. शल —श्, ष्, स्, and ह् स्पर्शा —mutes. अन्तस्थाः—semivowels.

ऊष्माण –sibilants and the aspirate ह् अणुदित्° —The letters comprised in the pratyāhāra अण् [ i e , vowels, semivowels and ह् ] when not specifically laid down by any sūtra, as also that which has an indicatory उ, designate their homogeneous letters also अप्रत्यय in the Sūtra excludes not only affixes (प्रत्ययs), but also augments (आदेशs) Hence the word is taken in the derivative sense See com अण्– Two Māheśvara sūtras–the first and the sixth–have an indicatory ण् There is likely to be a doubt about the interpretation of अण् So the author says– अत्रैवाण्° " In this case alone the pratyāhāra अण् should be understood as formed with the ण् of the later sūtra viz लण् (i e, it comprises vowels and semivowels )" ह् and र् though included in the प्रत्याहार have no homogeneous letter उदित् e. g कु, which thus stands for all the letters of the कवर्ग अ इत्यष्टादशानां°– अ being regarded as विवृत in applying the rules of the अष्टाध्यायी becomes homogeneous to and therefore stands for आ also. अ is therefore ह्रस्व, दीर्घ and प्लुत Each of these is उदात्त, अनुदात्त and स्वरित So अ has 9 forms Each of these is, again, अनुनासिक and अननुनासिक अ has thus 18 forms in all ऋकारस्त्रिंशत –Like अ, ऋ also has 18 forms. It stands again for ऌ (cf ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् । ) Now ऌ has no दीर्घ form It is therefore of 12 kinds only. Hence ऋ designates 30 forms (18 of ऋकार and 12 of ऌकार). अनुनासिकाननुनासिकभेदेन &c – य्, व् and ल् are either nasalised or not Their non-nasalised form designates both the varieties परः सन्निकर्ष °–" The extreme proximity of letters is called संहिता (combination) " हलोऽनन्तरा °–" Consonants not separated by vowels are called a conjunct consonant (संयोग)

P. 8. सुप्तिङन्तं°— "That which ends in a letter of the प्रत्याहार सुप् or that of the प्रत्याहार तिङ् is called पद" सुप् includes all the case-affixes Cf स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् । (P IV, 1, 2, ) and तिङ् all verbal terminations. (Cf. तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् । III, 4, 78, ). A पद means therefore a case-inflected word or a verbal form.

## The Sandhis of Vowels.

इको यण् °—" In combining letters (संहिता) ( the semi-vowels ) य्, व्, र्, and ल् (यण्) are substituted in the place of ( the vowels ) इ, उ, ऋ and ऌ ( short or long ) (इक्) when immediately followed by a vowel (अच्) " The author now proceeds to state a परिभाषा for the interpretation of this sūtra परिभाषा a maxim for the interpretation of the sūtras Cf म भा. on 11 परिभाषा एकदेशस्था सती कृत्स्नं शास्त्रमभिज्वलयति प्रदीपवत्। तद्यथा प्रदीप सुप्रज्वलित एकदेशस्थ सर्व वेश्माभिज्वलयति । Also cf. परितो व्यापृता भाषा परिभाषा प्रचक्षते । तस्मिन्निति°—" When a ( grammatical ) operation is laid down ( in a sūtra ) by using a word in the Locative, it should be understood as referring to the letter which immediately precedes " In the sūtra इको यणचि, therefore, यण् which is ordained by using अच् in the Locative comes in the place of इक् Now यण् includes य्, व्, र् and ल् Which of them is to be substituted in the place of ई in the example सुधी + उपास्य ? To answer this question the author quotes the next sūtra— स्थानेऽन्तरतमः " When many substitutes present themselves in the place of a letter, that which bears the greatest resemblance to it is the actual substitute " Of the four possible substitutes य्, व्, र् and ल्, य् resembles ई most, as both are pronounced by the same organ ( viz तालु ). Hence we get सुध्य् + उपास्य

P 9 Here the following sūtra presents itself. अनचि च ।— " Any consonant except ह् (यर्) preceded by a vowel is reduplicated optionally, but not when a vowel follows. " So we get सुध्ध्य्+उपास्य झलां जश् &c —" In the place of any consonant except a nasal and a semi-vowel (झल्), the third letter of its class (जश्) is substituted when followed by the third or fourth letter of a class (झश्)" So the first ध् is changed to द् संयोगान्तस्य &c.—" The final letter of an inflected word which ends in a conjunct consonant is dropped." पदस्य is to be supplied from the preceding sūtra This sūtra should mean, therefore, " An inflected word ending in a conjunct consonant is dropped. " How

dıd we get the meanıng, " The final letter of an ınflected word &c "? Ans.–By the next परिभाषासूत्र, अलोऽन्त्यस्य । " A substıtute comes ın the place of the final letter of the term used ın the genıtıve case (ın a sūtra)" The term पदस्य beıng ın the genıtıve, ıts final letter only ıs dropped A लोप also ıs regarded as a substıtute ın grammar In सुद्ध्य् + उपास्य whıch ıs a compound, the first member सुद्ध्य् retaıns ıts पदसज्ञा even after ıts case-affix ıs dropped by सुपो धातुप्रातिपदिकयो । For cf. प्रत्ययलोपे प्रत्ययलक्षणम् 1. (प्रत्यये लुप्तेऽपि तन्निमित्तक कार्य पदसज्ञादिक भवत्येव ) P 1, 1, 62 The final य् of सुद्ध्य् wıll, therefore, have to be dropped But thıs ıs prevented by the followıng Vārttıka of Kātyāyana–यणः प्रतिषेधो &c -" The prohıbıtıon of the elısıon laıd down by सयोगान्तस्य° should be stated ın the case of the semı-vowels (यण्) " The words इति वाच्यम्, उपसख्यानम् &c are characterıstıc of Varttıkas. The य् not beıng dropped, we get सुद्ध्युपास्य । ' worshıpped by the wıse ' Sımılarly मधु+अरि = मद्ध्वरि The enemy of Madhu (ı e , Vıshnu). धातृ+अश = धात्रश.– A portıon of the Creator ऌ+आकृति =लाकृति –A form of ऌ एचोऽयवायावः–For ए, ओ, ऐ and औ (एच्) are respectıvely substıtuted अय्, अव्, आय्, and आव् when followed by a vowel ' How do we get the sense of क्रमात् (respectıvely)? See यथासंख्यं° – " When ın a rule the substıtutes laıd down are equal ın number to the orıgınal letters, they should be mutually assıgned accordıng to the order of enumeratıon " So अय् ıs substıtuted for ए, अव् for ओ and so on हरे+ए (Datıve case-affix) = हरये, sımılarly विष्णो+ए = विष्णवे; नै+अक (ण्वुल्)=नायक ; so पौ+अक=पावक (fire).

P. 10 वान्तो &c "For ओ and औ are substıtuted अव् and आव् [ lıt what ends ın व् ] when an affix begınnıng wıth य् follows " So गो+य (यत् laıd down by गोपयसोर्यत् । IV, 3, 160 ın the sense of तस्य विकारः । )=गव्यम् the mılk of a cow नौ+य (यत् ın the sense of तेन तार्यम् ; see नौवयोधर्म° P. IV, 4, 91 )=नाव्यम् accessıble by a boat, fordable अध्वपरिमाणे च ।– " The ओ of गो ıs changed to अव् ın sense of a measure of dıstance also, when ıt ıs followed by यूति ın a compound." Why is च [ also ] used ın the वार्त्तिक ? Ans.– Because गव्यूति ıs used ın the Vedas ın the sense of a pasture-land.

Cf Rigveda X, 14, 2 नैषा गव्यूतिरपभर्तवा उ। गव्यूति –Two kosas. अदेङ् गुण – " Short अ as well as ए and ओ [ एङ् ] are called गुण " How is अत् taken to mean short अ only and not आ or अ३ ? See तपर ०– The word तपर though used only once in the sūtra should be taken in two senses [1] त पर यस्मात् "followed by त्" and [2] तात् पर·–" preceded by त्" " A vowel which is followed by त् and that which is preceded by त् designate only what requires the same measure of time ( for pronunciation ) " This is an exception to अणुदित् &c. Hence long and prolated अ do not get गुणसंज्ञा. For an illustration of तात् पर , see दैच् ( त्+ऐच् ) in वृद्धिरादैच् । आद्गुण – " When अ or आ is followed by a vowel ( अच् ), a गुण latter is substituted for both." उप+इन्द्र.=उपेन्द्रः Here of the three गुण letters, ए alone is the actual substitute, as being uttered with the throat and the palate, it is most similar to अ and इ, that have the throat and the palate as their respective organs of pronunciation So गंगा+उदकम्=गगोदकम्

P 11 उपदेशे –" A nasalised vowel in an उपदेश ( grammatical enunciation ) is called इत् " प्रतिज्ञानु°– " The students of Pānini's work know the nasality ( of a vowel ) from traditional teaching " There is no visible sign of nasality in Pānini's work, the अनुनासिकपाठ not being extant प्रतिज्ञया प्रतिज्ञामात्रेण समधिगम्यमानमानुनासिक्य येषा ते प्रतिज्ञानुनासिक्या । ते पाणिनीया यत्रानुनासिक्यं प्रतिजानते तत्रैव तदपठ्यमानमपि भवति नान्यत्र । ( प्रक्रियाकौमुदी ) लणसूत्रस्था° – " र् pronounced with the ( इत् ) letter अ in the sūtra लण् ( i. e , the प्रत्याहार 'र' ) designates both र् and ल् " उरण्°–अ, इ and उ ( अण् ) substituted for ऋ which, as seen above, stands for 30 forms ( 18 of ऋ and 12 of ऌ ) are always followed by the प्रत्याहार र ( i e by र् and ल् ) " कृष्ण+ऋद्धि· . Here by आद्गुण a गुण letter is to be substituted for अ and ऋ And if अ is substituted, it will be followed by र्, i. e , will have the form अर् Now of the three गुण letters अर्, ए and ओ, अर् alone can be the actual substitute, for it has some portion resembling both अ and ऋ So we get कृष्णर्द्धि । Similarly in तव+ऌकार·–तवल्कार ( your letter ऌ ) अल् is substi-

tuted for अ and ऌ लोपः शाकल्यस्य &c.–' According to शाकल्य य् and व् standing at the end of a पद and preceded by the letter अ ( i. e अ or आ ) are dropped when followed by a vowel, a semi-vowel or a soft consonant ( अश् )." Why 'according to शाकल्य' ? Because according to others, य् and व् are not dropped in such cases–in other words, य् and व् are optionally dropped Whenever a teacher's name is mentiond in a sūtra, the rule it lays down is considered as optional So हरे+इह=हरयिह or हर इह। Here, oh Hari !

P. 12. Now the question arises—Can we further combine the two vowels in the latter case by आद्गुण । ? *Ans* —No, for this is debarred by पूर्वत्रासिद्धम् " The rules taught hereafter ( in the last three पाद्s of the eighth adhyāya ) are to be regarded as not existing when the rules in the first seven adhyāyas and the first pāda of the eighth are to take effect Similarly in the last three pādas also, each succeeding rule is to be regarded as not existing in applying a preceding rule " अधिकारोऽयम्–The sūtra पूर्वत्रासिद्धम् । which stands at the beginning of the second पाद of the eighth adhyāya, is to be repeated ( अनुवृत्त ) in the succeeding sūtras to the end of that adhyāya Hence त्रिपाद्यामपि पूर्वं प्रति &c in the वृत्ति An अधिकारसूत्र is a governing rule, the influence of which extends over a number of succeeding Sūtras The elision of य् in हर+इह caused by लोप शाकल्यस्य । which occurs in the third pāda of the 8th adhyāya is to be regarded as not existing in considering the application of आद् गुण । which occurs in the sixth adhyāya i. e य् is regarded as present so far as that sūtra is concerned Hence no further sandhi Similarly विष्णो+इह = विष्णविह. वृद्धिरादैच्–' The vowels आ, ऐ and औ ( ऐच् ) are called वृद्धि " The reason why त् is prefixed to ऐच् is thus stated इद तर्हि प्रयोजनम् आन्तर्यतास्त्रिमात्रचतुर्मात्राणा स्थानिना त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा + ओदन खट्वौदन । Here औ which is substituted is not चतुर्मात्रक वृद्धिरेचि–" When ए, ओ, ऐ and औ ( एच् ) follow अ or आ, Vriddhi is substituted for both." गुणापवाद – This sūtra is an exception to आद्गुण । which therefore dose not apply in such cases.

कृष्ण + एकत्वम् = कृष्णैकत्वम् " oneness with Krishna." गगा + ओघ = गगौघ the stream of the Ganges. देव + ऐश्वर्यम् = देवैश्वर्यम्। कृष्ण + औत्कण्ठ्यम्– a longing after Krishna एत्येधत्यूठ्सु– " When the forms of इ to go ( एति ) and एध् to increase, beginning with ए or ऐ ( एच् ) and the substitute ऊठ् follow अ or आ, Vriddhi is substituted for both the vowels " This is an exception to एङि पररूपम्। उप + एति = उपैति ( He approaches ) उप + एधते = उपैधते ( He ) prospers. ऊठ् ( ऊ ) is a संप्रसारण substitute for the व् of वाह् before certain case affixes beginning with a vowel by वाह ऊठ्। VI, 4 132 प्रष्ठवाह् + शस् = प्रष्ठ + ऊह् + अस् = प्रष्ठौह Acc pl of प्रष्ठवाह् ' a young bull being trained for the plough. ' Why " beginning with ए or ऐ " ( एजाद्यो ) in this sūtra ? See उप + इत = उपेत। Here there is no वृद्धि substitute as the form of इ does not begin with ए, or ऐ मा भवान् प्रेदिधत्–प्रेदिधत् is Aorist 3 per sing of एध् with प्र (causal), the augment आ not being added on account of the presence of मा. प्र + इदिधत् = प्रेदिधत्। Here एध् does not begin with a diphthong and so no वृद्धि मा भवान् &c — Do not promote ( him )

P 13 अक्षादूहिन्यां°–" A Vṛiddhi vowel is also substituted when the word ऊहिनी comes after अक्ष " अक्ष + ऊहिनी = अक्षौहिणी. This and the following rules are वार्त्तिकs प्रादूह° " A Vriddhi vowel is also substituted when ऊह, ऊढ, ऊढि, एष and एष्य follow प्र. " प्र + ऊह – प्रौह good reasoning प्रौढि Boldness प्रैष. Sending ; a direction to a priest. प्रैष्य –A servant. ऋते च°– " A वृद्धि vowel is substituted also when in a compound with the first member having the sense of the instrumental case, ऋत comes after a word ending in अ or आ " सुख + ऋत –सुखार्त Happy Why do we say ' ( in a compound ) with the first member in the Instrumental case ' ? See परमश्चासौ ऋतश्च परमर्त। last gone Here the first member is in the Nominative Hence no वृद्धि प्रवत्सतर°– A वृद्धि vowel is also substituted, when ऋण follows प्र, वत्सतर, कम्बल, वसन, ऋण and दश, प्रार्णम्–A chief debt वत्सतरार्णम् the debt incurred for purchasing a calf. ऋणार्ण–the debt incurred for

paying off another debt. दशार्ण –दश ऋणानि दुर्गभूमयः यस्मिन् Eastern Malwa, with the capital विदिशा It corresponds with 'Dosarene' mentioned by Ptolemy It is mentioned by Kālidāsa in his *Meghadūta* I 23 There is also a river of the same name flowing through it दश ऋणानि जलानि यस्या सा दशार्णा नदी **उपसर्गा** &c "प्र and others when connected with an action (i e, prefixed to a verb &c) are called उपसर्गs (Prepositions)." **भूवाद्यो**°–" भू and others denoting an action are called Dhātus (roots)" For the interpretation of this sūtra see com **उपसर्गात्**°–" When a root beginning with ऋ follows a preposition ending in अ or आ, a वृद्धि vowel is substituted for both.–An exception to आद्गुण। प्र+ऋच्छति=प्रार्च्छति " He goes forth."

P. 14 **एङि पररूपम्**–When a root beginning with ए or ओ (एङ्) follows a preposition ending in अ or आ, the form of the subsequent vowel (पररूपम्) is substituted for both" प्र+एजते =प्रेजते. 'He shines very much. एज् to tremble is Parasm उप+ओषति=उपोषति 'He burns' (उष् 1st Conj Par to burn) An exception to वृद्धिरेचि। **अचोन्त्यादि**°–The portion of a word beginning with the last vowel (i. e, the final vowel together with the following consonants, if any,) is called टि" This is a सञ्ज्ञासूत्र as टि is a conventional term used by Pāṇini **शकन्ध्वादिषु**°–" In such words as शकन्धु, the form of the subsequent vowel is substituted for the टि portion of the first member and initial vowel of the second." शक+अन्धु – शकन्धु –A well of the Śakas (Scythians). Similarly कर्कन्धु – a well of the Karkas मनस् + ईषा = मनीषा desire लाङ्गल + ईषा = लाङ्गलीषा the handle of a plough आकृतिगण.– A list of words, which is not exhaustive, but contains a few typical cases. A word of the same type, if met with in literature, should be understood as included in it. Thus मार्तण्ड though not enumerated in the शकन्ध्वादिगण is seen to follow the present rule मृत + अण्ड + अण् = मार्तण्ड the Sun **ओमाङोश्च**- " when the word ओम् and the preposition आङ् follow अ or आ, the form of the subsequent vowel is substituted for both." शिव

+ आ + इहि = शिव + एहि = शिवेहि In such cases वृद्धि would otherwise have been substituted by वृद्धिरेचि। अकः सवर्णे &c.–When अ, इ, उ, ऋ, or ऌ (short or long) (अक्) is followed by a homogeneous vowel, the (corresponding) long vowel is substituted for both " दैत्य+अरि –दैत्यारि The enemy of demons. होतृ + ऋकार or होतृ + ऌकार = होतृकार –The letter ऋ or ऌ of the Hotri priest (Cf. ऋऌवर्णयोर्मिथ सावर्ण्यं वाच्यम्।)

P 15 एङः पदान्तात्°–" When ए and ओ at the end of a पद are followed by short अ, the form of the preceding vowel is substituted for both " हरे + अव = हरेऽव–Protect, oh Hari! अव–Imperative second person sing of अव् 1st conj Par. to protect This sūtra is an exception to एचोऽयवायाव. । सर्वत्र विभाषा &c.–" Everywhere (i e in the Vedic as well as common speech) the word गो, when it retains this form (एङन्त) at the end of a पद, optionally remains unchanged when followed by (short) अ " विभाषा–optionally गो + अग्रम् = गोअग्रम् or गोऽग्रम्–the best of cows (गवा अग्रम्) or led by cows (गाव अग्र यस्य) Why do we say " when it retains this form &c "? See चित्रगु + अग्रम्–led by those who have brindled cows चित्रगु –चित्रा गावो यस्य स (ब). Here गो does not retain its form and so the present rule does not apply. Why " at the end of a पद "? See गो+अस् (affix of the abl. or gen. singular)=गोः Here गो has no पदसंज्ञा (see com) and hence the sandhi is not prohibited. अनेकाल्° ' A substitute having more than one letter (अनेकाल्) or containing an indicatory शृ is substituted for the whole of the original word ". This is an exception to अलोन्त्यस्य। ङिच्च–" That which has an indicatory ङ्, though it may consist of more than one letter, is substituted for the final letter only of the original word." An exception to अनेकाल्°. अवङ्° " अवङ् is, according to Sphotāyana, (i e, optionally) substituted for गो, when it retains this form at the end of a पद, if it is followed by a vowel (अच्)" गो+अग्रम्=गवाग्रम् in addition to the two forms noted above अवङ् is ङित् and is, therefore, substituted for the final letter only of गो Why पदान्ते?

see गो + ङि [ Loc sing affix ] = गवि Here गो has no पदसंज्ञा. इन्द्रे च–अवङ् is also substituted for गो when followed by इन्द्र." गो + इन्द्र –गवेन्द्र The best bull. दूराद्धूते°–And in calling out to a person from a distance, the टि portion of a sentence is optionally prolated, प्लुतप्रगृह्या.°–" The प्लुत ( prolated ) and प्रगृह्य ( lit which must be kept separate ) vowels remain unchanged in all cases when followed by a vowel " आगच्छ &c –' Come, oh Krishna ! here ( your ) cow is grazing ' Here ( the prolated ) अ ३ of कृष्ण ३ is not combined with the initial अ of अत्र ईदूदेद्° ' A dual case–affix ending in ई, ऊ or ए is प्रगृह्य " हरी एतौ These two Haris अदसो मात्–" The vowels ई and ऊ coming after the letter म् of अदस् become प्रगृह्य " अमी ईशा These lords Why मात् ?–See अमुकेऽत्र " These here. " Here ए does not come immediately after म्, but after क् चादयः &c –" The words च and others, when not meaning a substance are called निपातs ". ( उच्चावचेष्वर्थेषु निपतन्ति इति निपाता । ) प्रादयः–प्र and others also are called निपातs They are separated from च and others as they are required to be supplied in the next sūtra, उपसर्गाः क्रियायोगे । See com

P 17. निपात &c –" A निपात consisting only of one vowel, except आ (आङ्), is प्रगृह्य " वाक्यस्मरणयोः° " आ has no indicatory ङ् when it refers to a ( previous ) sentence or indicates remembrance " e. g. आ एव नु° Oh ! you think so ! आ एव किल तत् Ah ! so it was ! अन्यत्र ङित्–" In other cases ( e g , when it denotes the sense of ईषत् slightly ) it has an indicatory ङ् " and is not, therefore, प्रगृह्य आ + उष्णम् = ओष्णम् Cf. ईषदर्थे क्रियायोगे मर्यादाभिविधौ च य । एतमात ङित विद्याद्वाक्यस्मरणयोरङित् ॥ ओत् –A निपात ending in ओ is प्रगृह्य " सम्बुद्धौ॰—" The vocative singular ending in ओ is, according to शाकल्य, ( i e , optionally ) प्रगृह्य when followed by the non-Vedic word इति " This word इति may be taken as used in the पदपाठ or in secular literature विष्णो + इति–विष्णो इति by the present rule, or विष्णविति by एचोऽयवायाव । मय उञो॰ " The particle उ ( उञ् ), coming after any letter of the five classes except ञ् ( मय् ) is optionally changed to व् when

followed by a vowel " इकोऽसवर्णे°–" According to शाकल्य, the vowels इ, उ, ऋ and ऌ ( short or long ) ( इक् ) at the end of a पद् are ( optionally ) shortened when a dissimilar vowel follows. " चक्री + अत्र = चक्रि अत्र or चक्र्यत्र Also दधि + अत्र = दधि अत्र or दध्यत्र ह्रस्वविधिसामर्थ्यात्° " This rule about the shortening of the vowels precludes further sandhi " ( Otherwise the shortening will be quite useless as we would get the same form in both the cases ). Why ' at the end of a पद् ' ? See गौरी + औ ( Nom or Acc dual affix ) = गौर्यौ । Here गौरी has no पदसंज्ञा Hence there is no option. अचो रहाभ्यां &c Any consonant except ह् ( यर् ) coming after र् or ह् following a vowel is optionally reduplicated " Hence गौरी + औ = गौर्य्यौ न समासे–" The optional shortening laid down by इकोऽसवर्णे &c. does not occur in a compound " वापी + अश्व –वाप्यश्व–The horse in a well ऋत्यकः– " The vowels अ, इ, उ, ऋ and ऌ ( short or long ) when at the end of a पद्, are optionally shortened when followed by short ऋ. ' ब्रह्मा + ऋषि = ब्रह्मर्षि or ब्रह्मऋषि Why " at the end of a पद् ? " See आ + ऋच्छ + अत् = आर्च्छत् । Here आ [ आट् ] is an augument and no पद् Hence it is not shortened

## The sandhis of consonants.

स्तोः श्चुना°–" When स् and letters of the dental class [ तु ] are combined ( योगे ) with श् and letters of the palatal class ( चु ), the latter are ( respectively ) substituted for the former " The word योगे ( when in combination ) is purposely used in the sūtra to show that the rule applies not only when श् and palatals come after स् and dentals, but vice versa also. By यथासंख्यमनुदेश.° श् is substituted for स्, च् for त् and so on रामस् + शेते = रामश्शेते Rāma sleeps ' रामस् + चिनोति = रामश्चिनोति–Rāma gathers सत् + चित् = सच्चित्–" Existence and consciousness ( intelligence ) ( which form the nature of Brahman ) शार्ङ्गिन् + जय = शार्ङ्गिञ्जय ' Oh Vishnu, be victorious ! '

P 19 शात्–" A dental letter is not changed to its corresponding palatal letter when it follows श् " This prohibition

indicates that the combination of स्तु and श्चु spoken of in स्तो श्चुना° may be in any order, ( i e., not necessarily 'respectively' ), for, otherwise, there was no need of this prohibition The substitutes will, however, be in the order of enumeration in the sūtra स्तो. श्चुना° as noticed above विच्छ् + न ( नङ् ) = विश् + न = विश्नः lustre Similarly प्रच्छ् + न ( नङ ) = प्रश्न । ष्टुना ष्टु –" When स् and dentals [ तु ] are combined with ष् and cerebrals [ टु ], the latter are ( respectively ) substituted for the former." रामस् + टीकते = रामष्टीकते– Rāma goes. पेष् + ता = पेष्टा ( a derivative from पिष् to grind ), a grinder चक्रिन् + ढौकसे = चक्रिण्ढौकसे, Oh discus – wielder ! Thou goest " **न पदान्तात्°** –" The letter स् and dentals when coming after cerebrals ( टु ) at the end of a पद are not changed to ष् and cerebrals except in the case of नाम् " षद् सन्त –being six. Here स् is not changed to ष् षट् ते– Those six. Why "at the end of a पद" ? See ईड्+ते = ईट्+ते = ईट्टे Here ट् does not occur at the end of a पद and hence ते is changed to टे Why "coming after cerebrals" ? Because, otherwise, त् would not be changed to ट् even after ष्, see [ सर्पिस् + तम = ] सर्पिष् + तम = सर्पिष्टमम्– Best ghee. Here सर्पिस् has पदसंज्ञा by स्वादिष्वसर्वनामस्थाने । (I, 4, 17) कप्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परत पूर्वं पदं स्यात् । Taddhita affixes are included in these A word gets पदसंज्ञा before a Taddhita affix beginning with a consonant and भसंज्ञा before one beginning with a vowel तमप् is laid down by अतिशायने तमबिष्ठनौ । V, 3, 55 सर्पिस् does not however end in ट् and hence the substitution of ट् for त् is not prohibited **अनाम्नवति** &c –A Vārttika which adds some more exceptions to न पदान्तात् टो । " Instead of 'except in the case of नाम्' we should read 'except in the cases of नाम्, नवति and नगरी' in the sūtra न पदान्तात्॰ " षट्+नाम् = षण्णाम् ( gen pl. of षष् ), षट् + नवति = षण्णवति =ninety-six ( Here न् of नवति is first changed to ण् and then ट् is changed to ण् by यरोऽनुनासिके॰ See below ) षट्+नगर्य = षण्णगर्य. । six cities.

P. 20 **तो षि** "A dental letter is not changed to its corresponding cerebral when followed by ष् " सन् षष्ठः– being sixth. **झलां**

